डाकखाना, और जिला इत्यादि शुद्ध और साफ २ लिखें कि जिस में पुस्तक के पहुंचने में रुकावट न होवे।

जो महाशय स्वयं जाकर पुस्तक लिया चाहैं वे नीचे लिखे पते में हमारे पास जाकर अथवा शहर कानपुर मोहल्ला चौक बजाजी में श्रीपण्डित बनारसीलाल वाजपेई ज्योतिषी के यहां से ले सकते हैं।

भवदीय

श्रीजगन्नाथमिश्र

मकान में

श्रीपण्डित रामनारायण तेवारी

एकौन्टेन्ट और चीफक्लर्क,

रेलवे लोको, आफिस

बी, ऐन्ड, डब्लू

रेलवे

समस्तीपूर, जिला दरभङ्गा॥

ॐ गायत्रीनमः

## समर्पणपत्रम् ।

महीसुराणामपवर्गदेन महीपतीनां विजयप्रदेन ॥

मही स्पृशां वित्त यशः करेण महौघपुञ्जप्रतिनाशकेन ॥ १ ॥

त्रयो प्रसू[गायत्री]पाद सुचिन्तनेन कृपाकटाक्षेण च शर्मदेन ॥

कृतं मयेदं यदपूर्वभाष्यं सनातनश्रेयविरक्षणाय ॥ २ ॥

विपश्चितां भूत्रिदिवौकसाञ्च राजन्यवंशाग्र महीपतीनाम् ॥

लक्ष्मीवतामूरुजवर्य्यकानां हस्ताम्बुजद्वारतयैव तेषाम् ॥३॥

भाष्यं तदेव निगमादिकसारगर्भं

नागाग्नि(३८)संख्य परिविस्तृतभावबीजम् ॥

सृष्टिस्थितिप्रलयकारणकारणेषु

वेदप्रसू[गायत्र्याः]पदवरेषु समर्पयामि ॥ ४ ॥

हाल समस्तीपुर
ता० २५।८।९८ ।

श्रीजगन्नाथ मिश्र ।
पाल्हेपुर, जिला कानपुर ।

---

# आर्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्यम् ।

## प्रथमप्रकरणम् ।

### पूर्वार्द्धम् ।

श्रीं दुर्गे पाहि माम् ।

गायत्रीमन्त्रम् ।

**ओ३म् भूर्भुवः स्वः तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । इति "यजुर्वेदे अध्या० ३६ मं० ३" । "सामवेदे अ० १३ ख० ४ प्र० ६ अर्द्ध ३ सू० १० ऋ० २" । "ऋग्वेदे मण्डल ३ सू० ६२ मं० १०" ॥**

पदच्छेदः ॥ ओम् । भूः । भुवः । स्वः । तत् । सवितुः । वरेण्यम् । भर्गः । देवस्य । धीमहि । धियः । यः । नः । प्रचोदयात् ॥ १ ॥

अन्वयः ॥ सवितुर्देवस्य तद्भर्गः ओम् धीमहि भूर्भुवः स्वर्वरेण्यम् यो नो धियः प्रचोदयात् ॥ १ ॥

पदार्थः ॥ ( सवितुः ) सूर्य्यादे"मंण्डलान्तर्गत" [ कथम्भूतस्य सवितुः ] (देवस्य) प्रकाशमानस्य (तद्भर्गः) तत्पापानां भर्जनहेतुभूतम् भर्गाख्यम् तेजो गायत्र्याः स्वरूपम् ( ओम् ) ब्रह्म ( धीमहि ) ध्यायामः [ कथम्भूतम् स्वरूपम् ] ( भूर्भुवः स्वः ) ब्राह्मणक्षत्रियवैश्यादिभिः ( वरेण्यम् ) वरणीयमुपासनीयम् वा ( यः ) यद्गायत्र्याः स्वरूपम् ( नः ) अस्माकम् ( धियः ) बुद्धीः प्राणांश्च कर्म्मणी वा ( प्रचोदयात् ) प्रेरयति प्रेरयेत् वा स्वप्रकाशेनात्मज्ञानमुपदिशतीति भावः ॥ १ ॥

"इह हि खलु निर्विघ्नपरिसमाप्तिकामो मङ्गलमाचरेदिति लौकिकावगीतशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकत्वेन भाष्यकर्त्ता विशिष्टशिष्टाचारप्रतिपालनाय सर्वदर्शनाभिमत स्वेष्टदेवता [ गायत्री ] प्रणिपातात्मकं मङ्गलं श्लोकद्वयेन प्रादुः कुर्वन्नाह ॥"

मङ्गलाचरणम् ॥ गायत्रीरूपिणं शम्भुङ्कम्(१)विज्ञानदाय-

---

(१) गायत्रीरूपिणं शम्भुङ्कमिति—शम्भोः शिवस्य गायत्र्येव साकारस्वरूपम्, अथवा गायत्र्येव निराकारावस्थायां शिव इत्येकादशभाष्ये स्पष्टीकृतम्। सा शिवस्वरूपा गायत्री सृष्टेरारम्भकाले ब्रह्मादिदेवान् सृष्टिप्रकरणनिदर्शनाय सृष्टिमार्गेषु प्रेरणाय वा स्वोपदेशं वेदं वदति, "येन तां वेदमातरमिति लोका वदन्ति"। तदेव गायत्र्युपदेशो वेदः परापरगुरुत्वेनाब्रह्ममनुष्यपर्य्यन्तमस्माकमपि प्राप्तो बभूव, तेन सा शिवस्वरूपा गायत्री

कम्। वन्दे सिद्धिप्रदश्चक्त्या दुष्कृतानाम्प्रशान्तये ॥ १ ॥ नाना शास्त्राणि (२) चालभ्य पूर्वाचार्य्य (३) मतानि च। सारं (४)

---

परापरत्वगुरुरूपेणास्माकमपि माता वा गुरुः। "तत्र प्रमाणम्। तत्र बृहन्नीलतन्त्रे ॥ परापरगुरुस्त्वं हि परमेष्टिरहं गुरुः। सर्वतन्त्रेषु मन्त्रेषु स्वयम्प्रकृतिरूपिणी ॥ पट० १ ॥ १ ॥ पुनःकङ्कालमालिनीतन्त्रे ॥ गुरुस्त्वं सर्वशास्त्राणां [वेदादीनाम्] मत्तमेव प्रकाशकः। त्वमेव गुरुरूपेण लोकानां त्राणकारिणीति। पट० २ ॥ २ ॥ पुनश्छान्दोग्योपनिषदि शङ्करभाष्यम्। गायत्री सारत्वाच्च ब्राह्मणस्य मातरमिव हित्वा गुरुतराङ्गायत्रीं ततोऽन्यद्गुरुतरं न प्रतिपद्यते। प्रपा० ३। खं० १२ ॥ ३ ॥ तेन गायत्र्येव सर्वेषां गुरुः इति सिद्धम्" सा गुरुः मातृभावेनास्माभिः कार्य्यस्य निर्विघ्नपरिसमाप्तये विद्यादिकार्य्यारम्भे सर्वदा चिन्तनीयेति भावः।

(२) शास्त्राणीति—शास्त्रं न० शिष्यतेऽनेन शास-ष्ट्रन्। हितानुशासने ग्रन्थे। निदेशग्रन्थयोः शास्त्रमित्यमरः ॥३।१७९॥ तेन शास्त्रशब्देन वेदादीनामार्षग्रन्थानाम् संज्ञा बोद्धव्या, कस्मात्?। शासनादनिशं देवि! वर्णाश्रमनिवासिनाम्। तारणात् सर्वपापेभ्यः शास्त्रमित्यभिधीयते ॥ इति कुला० तन्त्रे उल्ला० १७ ॥ पुनरत्रिसंहितायाम् ॥ नास्ति वेदात्परं शास्त्रं नास्ति मातुः परो गुरुः। अध्या० १।१४८ ॥ पुनर्महाभारतान्तर्गतानुशासनपर्वणि ॥ न हि वेदात्परं शास्त्रं नास्ति मातृसमो गुरुः ॥ अध्या० १०६।६५ ॥ तेन वेद एव मुख्यशास्त्रमिति भावः।

(३) आचार्य्येति—आचार्य्यास्त्रिविधाः सन्ति प्रेरको बोधकोऽन्न वा। मोक्षदश्चेति "तत्र-प्रमाणम्" चोदको बोधकश्चैव मोक्षदश्चापरः स्मृतः। इत्येषां त्रिविधो ज्ञेय आचार्य्यस्तु महीतले ॥ चोदको दर्शयेन्मार्गं बोधको स्थानमाचरेत्। मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वा-परमश्नुते ॥ इति ब्रह्मविद्योपनिषदि ॥ ५२+५३ ॥ अथाचार्य्यस्य लक्षणमाह ॥ उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यञ्च तमाचार्य्यम्प्रचक्षते ॥ मनु० अध्या० २।१४० ॥ १ ॥ पुनर्व्याससंहितायाम् ॥ अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः। सकल्पं सरहस्यञ्च तमाचार्य्यम्प्रचक्षते ॥ अध्या० ४।४२ ॥ २ ॥ पुनर्गायत्रीतन्त्रे ॥ आगमम्परमं तन्त्रं [शास्त्रं] पञ्चाशन्मातृकाक्षरम्। पञ्चाशन्मातृकाव्याख्यां यो जानाति द्विजोत्तमः ॥ आचार्य्यः स च विज्ञेयः सर्वतन्त्रेषु निर्णयम् ॥ पट० १ ॥ ३ ॥ पुनः कुलार्णवतन्त्रे ॥ स्वयमेवाचरेच्छिष्यानाचारेत् स्थापयेदपि। आचिनोतीह शास्त्रार्थमाचार्य्यस्तेन कथ्यते ॥ १ ॥ आचारवशमापन्नमध्यापयति यः स्वयम् ॥ यमादियोगसिद्धत्वादाचार्य्य इति कथ्यते ॥२॥

तेभ्यः समाकृष्य गायत्रीभाष्य(५)मीर्य्यते ॥ २ ॥

भाष्यम् ॥ अथ मन्त्रार्थानाम्भेदा निरूप्यन्ते (प्रश्नः) कतिविधा मन्त्रार्था भवन्ति(उत्तरम्)भावः,सम्प्रदायः निगमव्याख्या,सर्वरहस्यं, कौलिकश्च वा महत्तत्त्वादयः षट्प्रकारार्थाः भवन्ति ॥ तत्र प्रमाणम् ॥ मन्त्रार्थं कथ्यते देवि ! शृणु तत् प्रथमं प्रिये ! । भावार्थः सम्प्रदायार्थो निगमव्याख्याश्च [निगमोक्तिश्च] कौलिकः । तथा सर्वरहस्यार्थो महत्तत्त्वार्थ एव च ॥ इति गन्धर्व० तं० पट० २९ ॥ ( प्रश्नः ) को भावार्थः ( उत्तरम् ) यस्मिन्नर्थे मन्त्राणां स्थूलरूपेण भावः आशयः प्रकटीक्रियते स भावार्थः । ( प्रश्नः ) कः सम्प्रदा-

---

आम्नाय [वेदः] तत्त्वरूपत्वाच्चातुर्य्यात्मनिरूपणात् ॥ रागद्वेषादिशमनादाचार्य्य इति कीर्त्तितः ॥ श्लो० १७ ॥ पुनरमरकोषे ॥ मन्त्रव्याख्याकृदाचार्य्यः ॥ ब्रा० व० २१९ ॥

(४) सारमिति—सारं वैदिकमतस्याचार्य्याणामविरोधश्रेष्ठसिद्धान्तम् । तदेव धर्माभिलाषिभिः श्रेष्ठपुरुषैः सर्वदा ग्राह्यम् । तत्र प्रमाणम् ॥ इदं ज्ञानमिदं ज्ञेयं तत्सर्वं ज्ञातुमिच्छति । अपि वर्षसहस्राणि शास्त्रान्तं नाऽधिगच्छति ॥ विज्ञेयोऽक्षरतन्मात्रो जीवितं वापि चञ्चलम् । विहाय शास्त्रजालानि यत्सत्यं तदुपास्यताम् ॥ इति पैङ्गलोपनिषदि ॥ अध्या० ४।१६ ॥ १ ॥ पुनः सांख्यसूत्रे ॥ बहुशास्त्रगुरूपासनेऽपि सारादानम् षट्पदवत् ॥ अध्या० ४ । सू० १३ ॥ २ ॥ "तत्र भाष्यम् ॥ कर्त्तव्यमिति शेषः ॥ इति सांख्यप्रवचनभाष्ये ॥ पुना रुद्रयामलोत्तरतन्त्रे ॥ न पश्यति कलियुगे शास्त्राऽभिभूतचेतसः । अपि वर्षसहस्रेण शास्त्रान्तं नैव गच्छति ॥ तर्काद्यनेकशास्त्राणि अल्पायुर्विघ्नकोटयः । तस्मात्सारं विजानीयात् क्षीरं हंसमिवाम्भसि ॥ पट० १।२०२+२०३ ॥ पुनस्तत्रैव ॥ वेदागमपुराणानां सारमालोक्य यत्नतः । मनः संस्थापयेदिष्टम् [गायत्रीम्] पादाम्भोरुहमण्डले ॥ ३ ॥ पुनर्मार्कण्डेयपुराणे ॥ सारभूतमुपासीत ज्ञानं यत्कार्य्यसाधकम् । ज्ञानानाम्बहुतायेयं योगविघ्नकरी हि सः ॥ इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ॥ अपि कल्पसहस्रेषु नैव ज्ञेयम [गायत्र्याः स्वरूपम्] वाप्नुयात् ॥ अध्या० ४१।१८+१९ ॥ ४ ॥

(५) भाष्यमिति—भाष्यं न० सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ॥ स्वपदानि च

यार्थः ( उत्तरम् ) आर्य्याणां(१)द्विजातीनां (२) सन्ध्योपासनादि-

---

वर्णन्ते भाष्यं भाष्यविदो जनाः, इत्युक्तलक्षणे सूत्रव्याख्याग्रन्थभेदे। कथनीये, त्रि० ॥ इति शब्दस्तोममहानिधिकोषे ॥

(१) आर्य्याणामिति—आर्य्य·पु०·ऋ·ण्यत्। स्वामिन्, गुरौ,सुहृदि च, श्रेष्ठकुलोत्पन्ने, पूज्ये, श्रेष्ठे, सङ्गते, नाव्योक्तौ मान्ये, उदारचरिते, शान्तचित्ते। तस्य लक्षणमाह। कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् ॥ तिष्ठति प्रकृताचारे स वै आर्य्य इति स्मृतः ॥ १ ॥ ज्ञानी तपस्वी सन्तोषी सत्यवादी जितेन्द्रियः। दातादयालुनम्रश्च आर्य्यः स्यादष्टभिर्गुणैः ॥२॥ श्रुतिस्मृतिसदाचारः शुद्धाहारः सुनीतिमान्। प्रीतिमान् यो भवेन्नित्यं स आर्य्यः परिकीर्तितः ॥ ३ ॥ पूर्वोक्तलक्षणेनार्य्यशब्दः सम्प्रदायपक्षे केवलं ब्रह्मविष्णुशिवगुर्वादीनामेव बोधकः न त्वाधुनिकप्रचलितसम्प्रदायस्य ॥

(२) द्विजातीनामिति—ब्राह्मणः क्षत्रियो वैश्यः त्रयो वर्णाः द्विजातयः। मनु० अध्या० १०।८॥ अथ ब्राह्मणस्य लक्षणमाह। योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् ॥ विद्याविज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥ इति वशिष्टसंहितायाम् ॥ अध्या० ६। पुनर्गन्धर्वतन्त्रे। देहाद्भिन्नः शिवो देही परमानन्दरूपवान्। तद्ब्रह्मेति च यो विद्यात् स एव ब्राह्मणो मतः॥ पट० २९ ॥ २॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि भारद्वाजं प्रति भृगुवाक्यम्। शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः। नित्यव्रती(१) सत्यपरः स वै ब्राह्मण उच्यते ॥ पुनः॥ सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा। तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ अध्या० १८९। ३+४ ॥ ३॥ अथ क्षत्रियस्य लक्षणमाह ॥ तत्र क्षतात् क्षत्रिय इत्युच्यते। ब्राह्मणानां क्षतत्राणात् ततः क्षत्रिय उच्यते ॥ इति महाभारतान्तर्गतशान्तिपर्वणि ॥ अध्या० ५९।१२६। पुनस्तत्रैव भारद्वाजं प्रति भृगुवाक्यम्। क्षत्रजं सेवते कर्म्म वेदाध्ययनसङ्गतः। दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥ अध्या० १८९।५ ॥ पुनस्तत्रैव वैश्यस्य लक्षणमाह। विशत्याशु पशुभ्यश्च कृष्यादानरतिः शुचिः। वेदाध्ययनसम्पन्नः स वै वैश्य इति स्मृतः॥ अध्या० १८९।६ ॥ पुनस्तत्रैव द्विजादतिरिक्तवर्णस्य शूद्रस्यापि लक्षणमाह। सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः। त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥ शूद्रे चैतद्भवेल्लक्ष्यं द्विजेतत्र न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो

---

(१) व्रतमिति—धर्म्मश्च सत्यञ्च दमस्तपश्च अमात्सर्य्यं ह्रीस्तितिक्षानसूया। यज्ञश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादशब्राह्मणस्य॥ इति महाभारतान्तर्गत उद्योगपर्वणि ॥ अध्या० ४२।२० ॥

विधिरेव सम्प्रदायः ॥ तत्र प्रमाणम् ॥ अहरहः सन्ध्या(३)मुपासी(४)तेति श्रुतिः ॥ १ ॥ एतद्वै सन्धि सन्ध्यां ब्रह्मविद उपासत इति जाबालोपनिषत् ॥ २ ॥ प्रातः सन्ध्यामुपास्य सहस्रगायत्रीपूर्वकं सूर्य्योपस्थानं कृत्वेति संन्यासग्रहणकाले नारदपरिव्राजकोपनिषदि ॥ ४।३८ ॥ ३ ॥ पुनर्भस्मजाबालोपनिषदि । ततः सन्ध्यां सकुशोऽहरहरुपाऽऽसीत ॥ अध्या० २।४ ॥ पुनः षड्विंशब्राह्मणे ॥ तस्माद्ब्राह्मणोऽहोरात्रस्य योगे सन्ध्यामुपासीत ॥ प्रपा० ४ खं० ५ ॥ ५ ॥ पुनर्गोपथब्राह्मणे । ब्रह्म हेदं श्रियं प्रतिष्ठामायतनमैक्षत तत्तपस्व यदि तद्व्रते ध्रियेत तत्सत्ये प्रत्यष्ठित । सः सविता सावित्र्या ब्राह्मणं सृष्ट्वा तत् सावित्रीपर्य्यदधादित्यादि । यो ह वा एवंवित् ब्रह्मवित् पुण्यञ्च कीर्त्तिं लभते सुरभींश्च गन्धान्

---

न च ॥ अध्या० १८९।७+८ ॥ पुनस्तत्रैव वनपर्वणि । शूद्रे तु यद्भवेल्लक्ष्म्यं द्विजे तच्च न विद्यते ॥ न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ अध्या० १८०।२५ ॥

(३) सन्ध्यामिति, सन्ध्या० स्त्री० सम्० ध्यै अङ्‌डवा एकरूपकालोत्तरभाविपररूपकालस्यावकाशे, दिवारात्रस्य मध्यवर्त्तिकाले, सन्ध्याकाले उपास्यदेवताभेदे च । तत्र तस्मिन् स्थाने उपास्य देवता शब्देन गायत्र्येव बोधव्या ॥

(४) उपासीतेति, उपासना स्त्री० उप+आस+युच् देवताद्याराधने । वरिवस्या तु शुश्रूषा परिचर्य्याऽप्युपासनेत्यमरः ॥ ब्रा० व० २।२७ ॥ तत्रोपासनायाः लक्षणम् निर्दिश्यते । कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । समीपसेवा विधिना उपास्य इति कथ्यते । इति कुलार्णवतन्त्रे सप्तदशोल्लासे ॥ पुनः शिवगीतायाम् ॥ ज्ञानान्तरानन्तरितसजातिज्ञानसंहते । सम्पन्नदेवतात्मत्वमुपासनमुदीरितम् ॥ अध्या० १२।१६ ॥ अथ उपासनायाः भेदानि निरूप्यन्ते । उपासनाविधिस्तत्र चत्वारः परिकीर्त्तिताः ॥ सम्पदारोपसम्वर्गाध्यासा इति मनीषिभिः ॥ [सम्पदलक्षणमाह] अल्पस्य चाधिकत्वेन गुणयोगाद्विचिन्तनम् । अनन्तं वै मन इति सम्पद्विधिरुदीरितः ॥ [आरोपल०] विधावारोप्ययोपास्या सारोपः परिकीर्त्तितः ॥ यद्वोंकारमुद्गीथमुपासीतेत्युदाहृतः ॥ आरोपो बुद्धिपूर्वेण य उपासाविधिश्च सः ॥ (अध्यासल०) योषित्यग्निमतिर्यद्वदध्यासः स उदाहृतः ॥ [सम्वर्गल०] क्रियायोगेन चोपासाविधिः संवर्ग उच्यते ॥ इति शिवगीतायाम् ॥ अध्या० १२।१०+१४— ॥ ३ ॥

सोऽपहत पाप्मानं तथाश्रियमश्नु ते य एवं वेद यश्चैवं विद्वानेव-मेतां वेदानाम्मातरं सावित्रीं सम्पदमुपनिषदमुपास्त ॥ गो० ब्रा० पू० प्रपा० १।३८ ॥ ५ ॥ पुनस्तैत्तिरीयारण्यके। यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते ॥ यद्रात्र्या कुरुते पापं तद्रात्र्या प्रतिमुच्यते ॥ सर्ववर्णे महादेवि! सन्ध्याविद्ये सरस्वति! ॥६॥ पुन-र्गोभिलीयगृह्यसूत्रे। अथ य इमां सन्ध्यान्नोपास्ते नाचष्टे न स जयति, ये तूपास्ते श्रोत्रिया भवन्तीत्युपनीता ये सन्ध्या-काले च्छेदन,-भेदन,-भोजन,-मैथुन,-स्वपन-स्वाध्यायानाचरन्ति ते श्वशूकरसृगालगर्दभसर्पयोनिष्वभिसम्पद्यमानास्तमोऽभिसम्पद्यन्ते तस्मात्सायम्प्रातः सन्ध्यामुपासीतेति ॥ ७ ॥ पुनः सांख्यायन-गृह्यसूत्रे। अरण्ये समित्पाणिः सन्ध्यामुपासते नित्यं वाग्यतः उत्तरापराभिमुखोऽन्वष्टमादिशं मा नक्षत्रदर्शनात्। अतिक्रान्तायां महाव्याहृतीः स्वस्त्ययनान्यपि जप्त्वा। एवम्प्रातः प्राङ्मुखस्ति-ष्ठन्नामण्डलदर्शनात् ॥ ८ ॥ पुनश्छान्दोग्यपरिशिष्टे। एतत्सन्ध्या-त्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्। यस्य नास्त्यादरस्तत्र न च ब्राह्मण उच्यते ॥ ९ ॥ पुनराश्वलायनगृह्यसूत्रे। अथ सन्ध्या-मुपासीतेत्याचार्य्यो यावदहोरात्रयोः सन्धीयश्च पूर्वाह्नपराह्णयो-स्तत्कालभवा देवता सन्ध्या तामुपासीत ॥ १० ॥ पुनर्म्मानवधर्म-शास्त्रे। उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः। आचार-मग्निकार्य्यञ्च सन्ध्योपासनमेव च ॥ अध्या० २।६९ ॥ पुनस्तत्रैव। उत्थायावश्यकं कृत्वा कृतशौचस्समाहितः ॥ पूर्वां सन्ध्यां जपं-स्तिष्ठेत् स्वकाले चापराञ्चिरम्। अ० ४।९३। पुनस्तत्रैव। न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ॥ स शूद्रवद्बहि-ष्कार्य्यः सर्वस्माद् द्विजकर्म्मणः ॥ अ० २।१०७ ॥ ११ ॥ पुनरग्नि-

संहितायाम्। सायं प्रातस्तु यस्सन्ध्यां प्रमादातिक्रमेत्सकृत्। गायत्र्यास्तु सहस्रं हि जपेत् स्नात्वा समाहितः॥ अ० १।६२। पुनस्तत्रैव। सन्ध्या स्नानं जपो होमो देवतानित्यपूजनम्। अतिथिर्वैश्वदेवश्च देवब्राह्मण उच्यते। अ० १।३६५॥ १२॥ पुनर्विष्णुसंहितायाम्। सन्ध्याद्वयोरुपासनम्। पूर्वां सन्ध्यां जपेत्तिष्ठन् पश्चिमामासीनः॥ अ० २८ सू० २+३। पुनस्तत्रैव। चिरं संध्योपासनं कुर्य्यात्। अ० ७१। सू० ७७॥ १३॥ पुनर्हारीतसंहितायाम्। पूर्वां सन्ध्यां स नक्षत्रामुपासीत यथाविधि॥ गायत्रीमभ्यसेत्तावद् यावदादित्यदर्शनम्॥ उपास्य पश्चिमां सन्ध्यामादित्यञ्च यथाविधि। गायत्रीमभ्यसेत्तावद् यावत्तारां न पश्यति॥ अ० ४।१८+१९ ॥ १४॥ पुनर्धर्म्मशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम्। शरीरचिन्तान्निर्वर्त्य कृतशौचविधिर्द्विजः। प्रातस्सन्ध्यामुपासीत दन्तधावनपूर्वकम्॥ अ० १।९८। पुनस्तत्रैव। उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च॥ भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत्॥ अ० १।११४॥१५॥ पुनरौशनससंहितायाम्। सायं प्रातर्द्विजस्सन्ध्यामुपासीत समाहितः। कामाल्लोभाद्भयान्मोहात् कदा न पतितो भवेत्॥ अ० १।१५॥ १६॥ पुनः संवर्त्तसंहितायाम्। सन्ध्यां प्रातस्सनक्षत्रामुपासीत यथाविधि॥ सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्करे॥ अ० १।२३॥ १७॥ पुनः कात्यायनसंहितायाम्॥ अत ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनकं विधिम्। अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः॥ अ० ११।१। पुनस्तत्रैव। एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति। यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते॥ अ० ११।१५॥ १८॥ पुनः पराशरसंहितायाम्॥

सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम्। आतिथ्यं वैश्व-
देवञ्च षट्कर्म्माणि दिने दिने॥ अ० १।२८। पुनस्तत्रैव।
अग्निकार्य्यपरिभ्रष्टाः सन्ध्योपासनवर्जिताः॥ वेदाश्चैवानधी-
यानः सर्वे ते वृषलाः स्मृताः॥ अ० १२।२९॥ १९॥ पुनर्व्यास-
संहितायाम्॥ कृतशौचो निषेव्याग्निं दन्तां प्रक्षाल्य वारिणा॥
स्नात्वोपास्य द्विजः संध्यां देवादींश्चैव तर्पयेत्॥ अ० ३।२।
पुनस्तत्रैव। सायं संध्यामुपासीत हुत्वाग्निं भृत्यसंयुतः॥ अ०
३।३९॥ पुनस्तत्रैव॥ ग्रहिसानुदिते काले स्नानं संध्यां न
हापयेत्॥ अ० ३।७२॥ २०॥ पुनश्शंखसंहितायाम्। उपास्य
पश्चिमां संध्यां पूजयित्वा हुताशनम्॥ अ० ७।१७॥ २१॥ पुन-
र्लिखितसंहितायाम्। ततः संध्यामुपासीत शुद्धग्रते तदनन्तरम्॥
अ० १।६०॥ २२॥ पुनर्दक्षसंहितायाम्। संध्यायाञ्च प्रभाते
च मध्याह्ने च ततः पुनः॥ संध्यां नोपासते यस्तु ब्राह्मणो हि
विशेषतः॥ स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते॥ अ०
२।१८॥ २३॥ पुनर्भरद्वाजस्मृतौ। प्रातः सतारकां संध्यां
सायंसंध्यां सभास्कराम्॥ स्नानकर्म्मणि तन्मध्यामुपासीत यथा-
विधि॥ ब्रह्मकेशवरुद्रादिदेवताभिरुपासिता॥ सन्ध्यां को
नैव सेवेत विप्रः स्यादभिलाषु च॥ संध्यां नोपासते विप्राः कथं
ते ब्राह्मणाः स्मृताः॥ २४॥ पुनः पुलस्त्यस्मृतौ। संध्यामिष्टं
चरुं होमं यावज्जीवं समाचरेत्॥ न त्यजेत्सूतके वापि त्यजेद्
गच्छेदधो द्विजः॥ २५॥ पुनर्योगशास्त्रान्तार्गतयाज्ञवल्क्यसंहि-
तायाम्। तपोवनगतं सौम्यं संध्योपासनतत्परम्॥ याज्ञ०
सं० उत्त० अ० १।२। पुनस्तत्रैव। संध्यामुपास्य विधिवत्
पश्चिमां सुसमाहितः॥ अ० ११।११॥ २६॥ पुनर्मीमांसाशास्त्रा-

न्तर्गतजैमिनिमीमांसाशास्त्रे। एवमहरहस्संध्यामुपासीतेत्यादिना शुचिविहितकालजीवनः संध्योपासनाजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते। तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः। अधिकारश्च स एव यद्विधिवाक्ये पुरुषविशेषणत्वेन श्रूयते। यथा काम्ये कर्म्मणि फलकामना। नैमित्तिके कर्म्मणि निमित्तनिश्चयः। नित्ये संध्योपासनादौ शुचिविहितकालजीवित्वम्॥ २७॥ पुनर्वृहन्नीलतन्त्रे। संध्यामवश्यं कर्त्तव्या त्रिसंध्यं श्रद्धयान्वितैः॥ संध्यया विप्रहीनो यो न दीक्षाफलमाप्नुयात्॥ पट० १॥ २८॥ पुनर्म्महिषमर्दिनीतन्त्रे विहाय संध्यां गायत्रीं हरिनाम स्मरेद्यदि॥ यान्यक्षराणि नाम्नेव वसन्ति च शुचिस्मि ते॥ तानि व्य ान्यनेकानि पापानि च पदे पदे॥ अन्नं जलं तथा पुष्पं यद्दत्तं विष्णवे प्रिये॥ अन्नं विष्ठासमं तस्य जलं मूत्रसमंस्मृतम्॥ २९॥ पुनः कामाख्यातन्त्रे। वैदिकीं तान्त्रिकीं संध्यां जपेद्धोमवहिष्कृतः॥ अब्राह्मणः स एवोक्तः स एव हन्तमूर्खकः॥ पट० २॥ ३०॥ पुनर्गन्धर्वतन्त्रे॥ तिलकं कुलरूपञ्च कृत्वाचम्य विधानतः॥ ततः संध्यामुपासीत पापघ्ना येन साधना॥ पट० ६॥ ३१॥ पुनर्गौतमीतन्त्रे॥ तथा प्रातस्तनीं संध्यां कुर्य्यात् गुरुनिषेवकः॥ अध्या० ७। पुनस्तत्रैव। पूर्वन्तु कथिता संध्या ध्यायेद्देवीं समाहितः॥ अ० ९॥ ३२॥ पुनारुद्रयामलोत्तरतन्त्रे। ततोऽङ्गान्मार्जयित्वा तु संध्या वन्दनमाचरेत्॥ पट० ५४।६८॥ ३३॥ पुनर्महानिर्वाणतन्त्रे॥ संध्या त्रैकालकी कार्य्या वैदिकी तान्त्रिकी क्रमात्॥ उपासनाया-भेदेन पूजां कुर्य्याद् यथाविधि॥ उल्ला० ८।७६॥ ३४॥ पुनर्महाभारतान्तर्गतवनपर्वणि युधिष्ठिरं प्रति मार्कण्डेयवाक्यम्। सायं

प्रातश्च संध्यां यो ब्राह्मणोऽभ्युपसेवते॥ प्रजपन् पावनीं देवीं गायत्रीं वेदमातरम्॥ अ० १९९।८१॥ पुनस्तत्रैवानुशासन पर्वणि॥ ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्॥ उत्थायाचम्य तिष्ठेत्तु पूर्वां संध्यां कृताञ्जलिः॥ एवमेव परां संध्यां समुपासीत वाग्यतः॥ अ० ११४।१६+१७। युधिष्ठिरं प्रति भीष्मवाक्यम्॥ पुनस्तत्रैव। ये न पूर्वामुपासन्ते द्विजाः सन्ध्यां न पश्चिमाम्॥ सर्वां स्तां धार्मिको राजा शूद्रकर्माणि कारयेत्। अ० १०४। ॥ ३५॥ (प्रश्नः) तत्र का संध्या ?। (उत्तरम्) गायत्र्येव संध्या॥ तत्र प्रमाणम्॥ या संध्या सैव गायत्री द्विधा भूता व्यवस्थिता॥ पुनः॥ गायत्री नाम पूर्वाह्ने सावित्री मध्यमे दिने॥ सरस्वती च सायाह्ने सैव संध्या त्रिषु स्मृतेति याज्ञवल्क्यवाक्यम्॥ यद्वा शक्तिरेव संध्या॥ तत्र प्रमाणम्॥ शक्तिः संध्या मया प्रोक्ता [तस्या उपासना द्विजातिभिः] कर्त्तव्या साधकोत्तमैः॥ आत्मानन्दतरङ्गिण्याम्॥ उल्ला० ४॥ कस्माद्गायत्री संध्या वा शक्तिरित्युच्यते॥ तस्मादियं सदोपास्या निशादिवसयोर्द्विजैः॥ गायत्रीसन्धिवेलायां सैव संध्येति कीर्त्तिता॥ इति भरद्वाजस्मृतिः॥ पुनः कुलार्णवतन्त्रे॥ शतकोटिमहादिव्ययोगिनीप्रतिकारणात्॥ तीव्रस्फूर्त्तिप्रदानाच्च शक्तिरित्यभिधीयते॥ उल्ला० १७॥ पुनर्गायत्रीतन्त्रे॥ प्रकृत्या सहयोगेन ब्रह्माण्डं कोटिकोटिशः॥ शक्तो भवति सर्वत्र शक्तिस्तेनैव कथ्यतेति॥ ब्राह्मणपट० २॥ पुनर्देवीपुराणे शक्रं प्रति ब्रह्मणो वाक्यम्॥ शक्ताया जगतः कर्त्तुं सर्गानुग्रहसंग्रहान्॥ शक्तिशक्ती स्मृता धातुः शिवा शक्तिस्ततः स्मृता॥ अध्या० ३७। पुनर्महाभारतान्तर्गतविराटपर्वणि॥ त्वं कीर्त्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्यासन्ततिर्मतिः॥ संध्या रात्रिः प्रभा निद्रा

ज्योत्स्ना कान्तिः क्षमा दया॥ अ० ६।२४॥ पुनर्मार्कण्डेयपुराणान्तर्गतदुर्गायाम्। त्वमेव संध्या सावित्री त्वं देवि! जननी परा॥ अ० ८१।५५॥ तेन संध्याशब्देन गायत्री वा शक्तिरिति गृह्यते। तस्मात्। सर्वे शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः॥ आदिदेवीमुपासन्ते गायत्रीं वेदमातरमिति याज्ञवल्क्यवाक्यम्॥ पुनर्निर्वाणतन्त्रे शिववाक्यम्॥ शाक्ता एव द्विजाः सर्वे न शैवा न च वैष्णवाः॥ उपासन्ते यतो देवीं गायत्रीं परमाक्षरीम् (१)॥ पट० ३॥ २॥ पुनर्देवीभागवते॥ विष्णोरुपासना नित्या वेदेनोक्ता न कुत्रचित्॥ न विष्णोर्दीक्षा नित्यास्ति शिवस्यापि तथैव च॥ गायत्र्युपासनानित्या सर्ववेदैः समीरिता॥ यया विना त्वधःपातो ब्राह्मणस्येति सर्वथा॥ तावता कृतकृत्यत्वं नान्यापेक्षा द्विजस्य हि॥ गायत्रीमात्रनिष्णातो द्विजो मोक्षमवाप्नुयात्॥स्कं० १२। अ० ८।८८+९०। पुनस्तत्रैव। भगवन्! सर्वधर्मज्ञ! सर्वशास्त्रवताम्वर!॥ द्विजातीनान्तु सर्वेषां शक्त्युपास्या श्रुतीरितः॥ स्कं० १२।८।१। पुनस्तत्रैव। ब्रह्मादयोऽपि संध्यायां तां ध्यायन्ति जपन्ति च॥ वेदा (२) जपन्ति तां नित्यं वेदोपास्या ततः स्मृता॥ तस्मात्सर्वे द्विजाः शाक्ता न शैवा न च वैष्णवाः॥ आदिशक्तिमुपासन्ते गायत्रीं वेदमातरम्॥ स्कं० ११। अ० १६।१६+१७॥ ३॥ पुनर्विश्वामित्रेणोक्तं गायत्रीकल्पे। सर्वे शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः॥ मूलमन्त्रं(३)तु संशोध्य गायत्रीं वेदमात-

---

(१) परमाक्षरीमिति—परमाक्षरीमोङ्कारस्वरूपाम्।

(२) वेदा इति—मन्त्रब्राह्मणयोर्वेदनामधेयमिति कात्यायनवचनात्त न ब्राह्मणभागस्य कर्त्तारः ब्राह्मणाः वेदशब्देन बोद्धव्याः॥

(३) मूलमन्त्रन्तु संशोध्येति—ओंकार एव मूलमन्त्रः तत् संशोध्य विचार्य्येत्यर्थः॥

रम्॥ ज्ञेया शक्तिरियं विष्णोर्निर्मला स्वर्णभास्वरा॥ सत्त्वं रजस्तमश्चेति गुणत्रयप्रसूतिका॥ इति यो० शा० शिवसंहितायाम्॥ पट० ८।८२॥१॥ पुनः श्वेताश्वतरोपनिषदि, नारदपरिव्राजकोपनिषदि वा। ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं (१) स्वगुणैर्निगूढाम्॥ ना० परि० व्रा० उप० उप० ९।२। श्वेता० उप० १।३॥२॥ पुनः शाण्डिल्योपनिषदि। शक्तिमध्ये मनः कृत्वा शक्तिं [गायत्रीं] मानसमध्यगाम्॥ मनसा मन आलोक्य शाण्डिल्य त्वं सुखीभव॥ १८॥४॥ पुनर्योगकुण्डल्युपनिषदि॥ अपरं संत्यजेत्सर्वं यदीच्छेदात्मनो हितम्॥ शक्तिमध्ये मनः कृत्वा मनः शक्तेश्च मध्यगम्॥ अध्या० ३।४॥५॥ पुनर्गन्धर्वतन्त्रे शिववाक्यम्। प्रणमामि महादेवीं तुरीयां ब्रह्मरूपिणीम्॥ यस्याः स्मरणमात्रेण भवाब्धौ न निमज्जते॥ अस्यास्त्वाराधनां कृत्वा नान्यस्याराधनं चरेत्॥ अन्यस्य स्वाराधाद्दुःखं योगिनीशापमाप्नुयात्॥ अपमृत्युर्भवेत्तस्य मृते च नरकं व्रजेत्॥ एतामुपास्य देवेशि! किं न सिद्ध्यति भूतले॥ सकृदेनामुपास्यैव न मातुस्तनपो भवेत्॥ तस्माद्देवि! शुभे! भद्रे! तुरीयां समुपाश्रयेत्॥ पटल २। पुनस्तत्रैव। कुल(२)ज्ञानं विना देवि! नैव मुक्तिः कदाचन॥ मायाबलवती ह्येषा शक्तिर्गुणमयी तु या॥ प्रकृतिर्गीयते सा तु सांख्ययोगविशारदैः॥ विद्याऽविद्येति सा प्रोक्ता देवतत्त्वार्थदर्शिभिः॥ महाविद्येति सा कैश्चिन्महामायेति चापरैः॥ शक्तिः सा सर्वभूतानां तां च कश्चिदुपासते॥ सर्वे ते समुपासन्ते ब्रह्मविष्णु-

---

(१) देवात्मशक्तिमिति—देवः सच्चिदानन्दात्मा परब्रह्म तस्य साकारस्वरूपं शक्तिमित्यर्थः।

(२) कुलेति—कुलशब्देन शक्तिरिति बोद्धव्यम्।

महेश्वराः ॥ तस्या एव न मे भेदो विष्णोर्ब्रह्मणि एव वा ॥ योगभोगतपःक्लेशैरानन्त्यैरभिनन्दिता ॥ आराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥ परितोष्य विधानेन येन तेनैव साधकः ॥ संसारनिगडैर्बद्धः स पुमान्मुच्यते तया ॥ तस्यास्तोषं विना देवि ! विमुक्तिर्नैव विद्यते ॥ तन्निगृहीतचित्तानां पुंसां पुरुषपूजिते ॥ अतस्तान्च प्रयत्नेन पुरुषा मुक्तिलिप्सवः ॥ समाश्रयन्ति योगाद्यैर्नित्यानन्दस्वरूपिणीम् ॥ ब्रह्मा विष्णुस्तथा चाहमात्मवत् (१) समुपास्महे ॥ तपःक्लेशैश्च तां देवि ! पशुभावस्थितो विधिः ॥ सन्तोष्य परया भक्त्या सावित्रीं वेदमातरम् ॥ तद्(२)भावमाश्रितो विप्रस्तामेव समुपासते ॥ पट० ३७ ॥ ६ ॥ पुनारुद्रयामलपूर्वतन्त्रे गायत्रीरहस्ये । देवदेवीति या देवी वेदमाता सरस्वती ॥ गायत्री त्रिपदा देवी त्र्यक्षरी [ ओंकारस्वरूपा ] भुवनेश्वरी ॥ चतुर्विंशाक्षरा(३)विद्या सा चैवाभीष्टदेवता ॥

---

(१) आत्मवदिति—सशरीरवत्त्वेन इन्द्रियादियुक्तसाकारस्वरूपेत्यर्थः ॥ पुनः फेत्कारिणीतन्त्रे । स्वदेहवद्देवदेहस्ततः पादादिकल्पयेत् ॥ पट० २ ॥ पुनः ज्ञानसङ्कलिनीतन्त्रे शरीरञ्चैवमात्मानमन्तरात्मा मनो भवेत् ॥ परमात्म भवेच्छून्यं मनो यत्र विलीयते ॥ पट० १ । पुनर्गौतमीतन्त्रे । आत्मान्तरात्मा परमात्मा ज्ञानात्मा च ते मताः ॥ आत्मासौच जगत्तुल्यो विश्वात्मा विश्वरूपकः ॥ अध्या० २ ॥

(२) तद्भावमिति—ब्रह्मभावमित्यर्थः । यद्वा गायत्र्येव ब्रह्मणः स्वरूपेति भाव इत्यर्थः ॥ पुनः ॥ नित्या सा सुखरूपा च महासुखशुभप्रदा ॥ तत्स्वरूपानन्दमया परमानन्दरूपिणी ॥ इति गन्धर्वतन्त्रे पट० ३ ॥ पुनर्देवीभागवतान्तर्गतभगवतीगीतायाम् । तत्पदस्य च वाच्यार्थी गिरेऽहं परिकीर्त्तितः ॥ अध्या० ४।२० । हिमाचलं प्रति भगवतीवाक्यम् ॥

(३) चतुर्विंशाक्षरेति—तत्सवितुरिति चतुर्विंशाक्षरी गायत्रीमन्त्रः तेन मन्त्रेण या प्रतिपादिता सा चतुर्विंशाक्षरेत्यर्थः । यद्वा तत्सवितुरिति चतुर्विंशाक्षर स्वरूपेत्यर्थः ॥

पुनस्तत्रैव । सर्वसौख्यप्रजनकं सर्वज्ञानमयं शिवम् ॥ परा परात्मा परमा कला ब्रह्मस्वरूपिणी ॥ गायत्री सा महेशानी परब्रह्मात्मिका मता ॥ यां देवीञ्च वरारोहे ! चेतसा चिन्तयाम्यहम् । ऐश्वर्यञ्च ततः प्राप्तं वरदादि त्वमेव च ॥ पुनस्तत्रैवोत्तरतन्त्रे । चिद्रूपां ज्ञाननिलयां चैतन्यानन्दविग्रहाम् ॥ कोटिसौदामिनीभासां सर्वतत्त्वस्वरूपिणीम् ॥ अष्टादशभुजां रौद्रीं शववासाचलप्रियाम् ॥ आश्रित्य प्रजपेन्मन्त्रं कुलमार्गाश्रयो (१) नरः ॥ कुलमार्गात्परं मार्गं को जानाति जगत्त्रये ॥ एतन्मार्गप्रसादेन ब्रह्मा स्रष्टा स्वयं महान् ॥ विष्णुश्च पालने शक्तो निर्मलः सत्त्वरूपधृक् ॥ सर्वसेव्यो महापूज्यो यजुर्वेदाधिपो महान् ॥ हरः संहारकर्त्ता च विशेषो मत्तमानसः ॥ सर्वः समात्मकः क्रोधी क्रोधराजो महाबली ॥ पट० १७।१४६+१५० । पुनस्तत्रैव । गायत्री गणनायिकामतिर्गतिर्ग्लानिघ्नभूताश्रया, गीता गोकुलकामिनी गुरुतरा गार्हाग्निजेया यदा ॥ गोरूपा गयुता गया गुणवती गाथापथस्थायिनी कुर्वन्ती प्रतिपालनं त्रिजगतां गायत्रिका तां भजे ॥ पट० १८।२१ । पुनस्तत्रैव । भाव्यां [चिन्तनीयाम्] देवगणैः शिवेन्द्रयतिभिर्मोक्षार्थिभिर्वालिकाम् ॥ संध्यां नित्यगुणोदयां द्विजगणश्रेष्ठो दयां सारणाम् ॥ शुक्लाभां परमेश्वरीं शुभकरीं भद्रां विशालाननां, गायत्रीं गणमातरं दिनगते कृष्णाञ्च वृद्धां भजे ॥ पट० ८।१६ । पुनस्तत्रैव । साक्षादहं त्रिभुवनामृतपूर्णदेहां संध्यादिदेवि कमलां कुलपण्डितेन्द्राम् ॥ तन्मे भजेद्यशते दलमध्यमध्ये कौलेश्वरीं

(१) कुलमार्गेति—कुलमार्गं शाक्तमार्गमिति भावः—

दिव्यजनाश्रमां ताम् ॥ पट० ८।२२ ॥ ८ ॥ पुनः कामाख्या-तन्त्रे । शक्तिमूलं साधनञ्च शक्तिमूलं जपादिकम् ॥ शक्तिमूला जपाश्चैव शक्तिमूलं च जीवनम् ॥ ऐहिकं शक्तिमूलञ्च परत्र शक्ति-मूलकम् ॥ शक्तिमूलं तपः सर्वं चतुर्वर्गस्तथा प्रिये ! ॥ पट० २ ॥ ९ ॥ पुनर्गुप्तसाधनतन्त्रे । शक्तिमूलं जगत्सर्वं शक्तिमूलं परन्तपः ॥ शक्तिमाश्रित्य निवसेद् यत्र कुत्राश्रमे वसन् ॥ साधकेनार्चितां शक्तिं साधकज्ञानकारिणीम् ॥ पट० १ ॥ १० ॥ पुनर्निरुत्तर-तन्त्रे । महाकल्पतरुः काली (१) अनिरुद्धसरस्वती ॥ ब्रह्म-विष्णुमहेशानां भुक्तिमुक्त्येककारणम् ॥ पट० २ ॥११॥ पुना राधा-तन्त्रे । शक्तिं विना परब्रह्म न भाति शवरूपवत् ॥ पट० ६ । पुनस्तत्रैव । यत्र काशी महामाया नित्या योनिस्वरूपिणी ॥ नाकाशी परमाराध्या ब्रह्माद्यैः परिसेविता ॥ मुहूर्त्तं यत्र यज्जप्तं लक्षवर्षफलं लभेत् ॥ तत्र गत्वा वासुदेवः [कृष्णः] सम्पूज्य जपमारभत ॥ संपूज्य विधिवद्देवीं भवानीं परमेश्वरीम् ॥ [तत्रैव] आविरासीन्महामाया तत्क्षणात् कमलेक्षणे ! ॥ आवि-र्भूय महामाया त्रिपुरा (२) परमेश्वरी ॥ विलोकयद्वासुदेवं

---

(१) कस्मात्काली कालीत्युच्यते ॥ कलनात् सर्वभूतानां महाकालः प्रकीर्त्तितः ॥ महाकालस्य कलनात् त्वमाद्या कालिका परेति ॥ महानिर्वाणतन्त्रे ॥ ४।३१ ॥ पुन-र्देवीपुराणे । कलनात् कालसंख्या वा काली देवेषु गीयते ॥ अध्या० ३९ ॥

(२) कस्मात् त्रिपुरेत्युच्यते ॥ त्रिपुराऽभिधाभगवतीत्येवमादिशक्त्या भूर्भुवः स्वस्त्रीणि॰ स्वर्गभूपातालानि त्रिपुराणि ह्रस्मायात्मकेन क्रोङ्कारेण ह्रस्रखाऽख्या भगवती त्रिकूटाऽव-साने त्रिलये विलये धाम्नि महता घोरेण व्याप्नोति सेवेयं भगवती त्रिपुरेति व्यापठ्यते ॥ इति त्रिपुरतापिन्युपनिषदि । १ ॥ पुनः गन्धर्वतन्त्रे । त्रयाणामपि देवानां प्रचोदिता त्रिपादिका ॥ त्रिपुरेति समाख्याता कामदा सा हि पार्वति ॥ पट० २ ॥

श्वासधारणमात्रकम् ॥ विलोक्य कृपया दृष्ट्यामृतैः शिवेदिव प्रिये ! ॥ उत्तिष्ठ वत्स ! हे पुत्र ! किमर्थं तप्यते तपः ॥ भो पुत्र ! शीघ्रमुत्तिष्ठ वरं वरय मे सुत ! ॥ तच्छ्रुत्वा परमं वाक्यम् त्रिपुरायाः सुधाश्रयम् ॥ वाक्यं तस्यास्ततः श्रुत्वा त्यक्त्वा योगन्तु तत्क्षणात् ॥ पपात चरणेऽन्तस्थे त्रिपुरायाः सुचिस्मिते ॥ नमस्ते त्रिपुरे ! मातर्नमस्ते दुःखनाशिनि !॥ नमस्ते शङ्कराराध्ये ! कृष्णाराध्ये ! नमोऽस्तु ते ॥ पुनस्तत्रैव । दमनं कालियस्यापि यमलार्ज्जुनभञ्जनम् ॥ भञ्जनं शकटस्यापि तृणावर्त्तवधस्तथा ॥ वक-केशिविनाशञ्च पर्वतस्य च धारणम् ॥ दावानलस्य पानञ्च यद्-यदन्यं सुचिस्मिते ॥ कृष्णस्य परमेशानि ! यद्यत् कार्य्यं वरानने !॥ तत्सर्वं परमेशानि ! कालिकायाः प्रसादतः ॥ पट० २२ ॥ १२ ॥ पुनर्म्महाभारतान्तर्गतवनपर्वणि ॥ शक्त्या देव्याः साधनञ्च तथा परविदामपि ॥ विश्वामित्रं चकारैतत्कर्म्म लोकहिताय वै ॥ अ० २२५।१५ ॥ पुनस्तत्रैव द्रोणपर्वणि ॥ ततः सन्ध्यामुपास्यैव वीरौ वीरावसादने । कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ॥ ततः स्वशिविरं प्राप्तौ हतानन्दहतत्विषम् ॥ वासुदेवोऽर्ज्जुनश्चैव कृत्वा कर्म्म सुदुष्करम् ॥ अ० ८०।४८ ॥ पुनस्तत्रैव शान्तिपर्वणि । दृष-द्वतीं चाप्यवगाह्य सुव्रताः कृतोदकार्य्याः कृतजाप्यमङ्गलाः ॥ उपास्य सन्ध्यां विधिवत् परन्तपास्ततः पुरं ते विविशुर्गजाह्वयम् ॥ अ० ५८।२० ॥ पुनस्तत्रैवाचारलक्षणे । सायं प्रातर्जपेत् सन्ध्यां तिष्ठन् पूर्वां तथेतराम् ॥ अ० १९३।४ ॥ पुनस्तत्रैव । पादशौचन्तु कृत्वैव शुकः सन्ध्यामुपास्य च ॥ निषसादासने पुण्ये तमेवार्थं वि-चिन्तयन् ॥ अ० ३२६।२९ ॥ १३ ॥ पुनर्वाल्मीकीयरामायणे बाल-काण्डे । प्रभातायान्तु शर्वर्य्यां विश्वामित्रो महामुनिः ॥ अभ्य-

भाषत काकुत्स्थौ शयानौ पर्णसंस्तरे॥ कौशल्यासुप्रजा राम! पूर्वा सन्ध्या प्रवर्त्तते॥ उत्तिष्ठ नरशार्दूल! कर्त्तव्यं दैवमाह्निकम्॥ तस्यर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ॥ स्नात्वा कृतोदकौ वीरौ जपेतुः परमं जपम्॥ (१)॥ सर्ग २३।१+२। पुनस्तत्रैव। कुमार्यववतां रात्रिमुषित्वा सुसमाहितौ॥ प्रभातकाले चोत्थाय पूर्वां सन्ध्यामुपास्य च॥ प्रशुचौ परमं जाप्यं समाप्य नियमेन च॥ हुताऽग्निहोत्रमासीनं विश्वामित्रमवन्दताम्॥ स० ३१।३१+३२। पुनस्तत्रैव अयोध्याकाण्डे। तत्र शृण्वन् सुखावाचः सूतमागधवन्दिभिः॥ पूर्वां सन्ध्यामुपासीनो जजाप सुसमाहितः॥ स० ६। ६। पुनस्तत्रैव। सोऽश्वान् सुमन्त्रः संयम्य सूर्येऽस्तं समुपागते॥ प्रभूतं यवसान् कृत्वा बभूव प्रत्यनन्तरः॥ उपास्य तु शिवां (२) सन्ध्यां दृष्ट्वा रात्रिमुपस्थिताम्॥ रामस्य शयने चक्रे सूतः सौमित्रिणा सह॥ स० ४६।११+१२। पुनस्तत्रैव। रामोऽपि रात्रिशेषेण तेनैव महदन्तरम्॥ जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन्। तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा॥ उपास्य तु शिवां संध्यां विषयान्तं व्यगाहत॥ स० ४९।१+२॥ पुनस्तत्रैवारण्यकाण्डे। तत्रैव सुप्तो परमं रामः संध्यामुपागमत्॥ अन्वास्य पश्चिमां संध्यां तत्र वासमकल्पयत्॥ स०।७।२२। पुनस्तत्रैव युद्धकाण्डे। दिवक्षयान्मन्दवपुर्भास्करोऽस्तमुपागतः॥ आश्वासितो

(१) परमं जपमिति—सोमादित्यन्वयाः सर्वे राघवाः कुरवस्तथा॥ पठन्ति शुचयो नित्यं सावित्रीं परमां गतिम्॥ इति महाभारतान्तर्गत अनुशासनपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम्॥ अध्या० १५०।७८॥

(२) शिवामिति—शिवा मुक्तिः समाख्याता योगिनां मोक्षगामिनी॥ शिवाय योजयेद्देवी शिवालोके ततः स्मृतेति देवीपुराणे॥ अध्या० २७॥ अतएव शिवाशब्देन मोक्षदात्रीत्यर्थः॥

लक्ष्मणेन रामः सन्ध्यामुपाविशत ॥ स० ५।२२ । पुनस्तत्रैवोत्तर-
काण्डे । तत्र हेमगिरिप्रख्यं तरुणार्कनिभाननम् ॥ रावणो वालिनं
दृष्ट्वा संध्योपासनतत्परम् ॥ स० ३९।१२ । पुनस्तत्रैव । उत्तरे
सागरे सन्ध्यामुपासित्वा दशाननम् ॥ वहमानोऽगमद्वाली पूर्वं वै
स महोदधिम् ॥ स० ४१।२१ । पुनस्तत्रैव । ऋषेर्वचनमाज्ञाय
रामः सन्ध्यामुपासितुम् ॥ अपाक्रामत् सरः पुण्यमप्सरो गण-
सेवितम् ॥ तत्रोदकमुपस्पृश्य सन्ध्यामन्वास्य पश्चिमाम् ॥ आश्रमं
प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥ स० ८५।१+२ ॥ १४ ॥ पुन-
र्मार्कण्डेयपुराणे । ततस्तं गालवं विप्रं सन्ध्योपासनतत्परम् ॥
शूकरं रूपमास्थाय प्रधर्षयितुमागतम् ॥ अ० २१।४ । १५ ॥ पुन-
र्देवीपुराणे शक्रं प्रति ब्रह्मवाक्यम् ॥ ब्रह्मोवाच । शृणु तस्य सु-
राध्यक्ष आराधनविधिं परम् ॥ यथा स तोषिता पूर्वं शङ्कराद्यैः
फलेप्सुभिः ॥ कर्मयज्ञेन देवेश ! तथात्वमपि पूजय ॥ शम्भुः पूज-
यते देवीं मन्त्रशक्तिमयीं [ ओंकारस्वरूपां ] शुभाम् ॥ अक्षमाला-
करो नित्यं तेनासौ विभवान्तरः ॥ अहं शैलमयीं देवीं यजामि
सुरसत्तम ! ॥ तेन ब्रह्मत्वमेवेदं मया प्राप्तं सुदुर्लभम् ॥ इन्द्रनील-
मयीं देवीं विष्णुरर्चयते सदा ॥ विष्णुत्वं प्राप्तवांस्तेन अद्भुतं कांस-
नाशनम् ॥ देवीं हैममयीं कान्तां धनदोऽर्चयते सदा ॥ तेनासौ
धनदो देव ! धनेशत्वमवाप्नुवान् ॥ विश्वेदेवा महात्मानो रौप्यां
देवीं मनोहराम् ॥ यजन्ति विधिवद्भक्त्या तेन विश्वत्वमाप्नुवन् ॥
वायुः पूजयते भक्त्या देवीं पित्तलसम्भवाम् ॥ वायुत्वं तेन तत्प्राप्त-
मनौपम्यगुणावहम् ॥ वसवः कामिकां देवीं पूजयन्ते विधानतः ॥
प्राप्नुवंस्तन्महात्मानो वसुत्वं सुमहोदयम् ॥ अश्विनौ पृथिवीं देवीं
पूजयेते विधानतः ॥ तेन तावश्विनौ देवौ दिव्यदेहगतावुभौ ॥

स्फटिकां शोभनां देवीं वरुणोऽर्च्चयते सदा ॥ वरुणत्वं हि संप्राप्तं तेन श्रद्धया समन्वितम् ॥ देवीं रत्नमयीं पुण्यामग्निर्यजति भावितः [ उपासितः ] ॥ अग्नित्वं प्राप्तवांस्तेन तेजोरूपसमन्वितम् ॥ ताम्रां देवीं सदाकालं भक्त्या देवो दिवाकरः ॥ अर्च्चते तेन संप्राप्तं तेन सूर्य्यत्वमुत्तमम् ॥ मुक्ताफलमयीं देवीं सोमः पूजयते सदा ॥ तेन सोमोऽपि सोमत्वं संप्राप्तः सततोज्ज्वलम् ॥ प्रवालकमयीं देवीं यजन्ते गुह्यकादयः ॥ तेन भोगरसोपेताः प्रयान्तीश्वरमन्दिरम् ॥ वज्रलोहमयीं देवीं यजन्ते मातरः सदा ॥ मातृत्वं प्रापिताः सर्वाः प्रयान्ति परमं पदम् ॥ एवं देवाः सगन्धर्वाः पिशाचोरगराक्षसाः ॥ पूजयन्ति सदा कालीं चर्च्चिकां सुरनायिकाम् ॥ तथा त्वमपि देवेन्द्र ! यदिच्छसि परां गतिम् ॥ शिवां मणिमयीं [प्रकाशमानां] पूज्य लभते मनसेप्सितान् ॥ अध्या० ३१ ॥ १६ ॥ अत्र पूर्वोक्तप्रमाणानुसारेण सन्ध्योपासनादिविधिरेवार्य्यसम्प्रदाय इति सिद्धम् ॥ (प्रश्नः) कस्मात्सम्प्रदायः ?। (उत्तरम्) संसारसारभूतत्वात् प्रकाशानन्ददानतः ॥ यशःसौभाग्यकरणात् सम्प्रदाय इतीरितः ॥ इति कुलार्णवतन्त्रे सप्तदशोल्लासे ॥ तेन गायत्र्या उपासनैव कारणं यशस्सौभाग्यानन्दप्राप्तौ एवञ्च तस्याः साङ्गोपाङ्गोपासनाप्रतिपादिको विधिरेव निदर्शितो यस्मिन्नर्थे सः सम्प्रदायार्थः ॥२॥ (प्रश्नः) कः निगमव्याख्यार्थः ? (उत्तरम्) निगमो वेदस्तन्मतानुसारपूर्वकम् विशेषेण आख्यानं कथनं वर्त्तते यस्मिन्नर्थे स निगमव्याख्यार्थः ॥ ३ ॥ ( प्रश्नः ) कस्सर्वरहस्यार्थः ? ॥ ( उत्तरम् ) यस्मिन्नर्थे मन्त्राणां सर्वरहस्यगुप्तार्थः प्रकटीक्रियते स सर्वरहस्यार्थः ॥४॥ (प्रश्नः) कः कौलिकार्थः ? (उत्तरम्) यस्मिन्नर्थे शक्तिर्वा गायत्री तस्यैवोपासनया द्विजातीनां अर्थं मोक्षं भवतीति

ज्ञानं स्पष्टीक्रियते स कौलिकार्थः॥ तत्र प्रमाणम्॥ कुलं गोत्रं समाख्यातं तच्च शक्तिशिवोद्भवम्॥ येन मोक्ष इति ज्ञानं कौलिकः सोऽभिधीयते॥ वा॥ अकुलं शिवतामुक्तं कुलं शक्तिप्रकीर्त्तितम्॥ कुलाकुलानुसन्धानान्निपुणाः कौलिकाः प्रिये!॥ इति कुलार्णवतन्त्रे सप्तदशोल्लासे॥ तेन यस्मिन्नर्थे साकारावस्थायां गायत्र्यैव ब्रह्मणस्साकारस्वरूपम् वा निराकारावस्थायां सा शिवेति, वा षट्चक्रान्तर्गतमूलाधाराद्युपासनास्थानभेदेषु तयोरुपासनाकरणान्मोक्षो भविष्यतीति, ज्ञानम् स्पष्टीक्रियते स कौलिकार्थः॥ ५॥ (प्रश्नः) को महत्तत्वार्थः?। (उत्तरम्) महदिति ब्रह्म वा आत्मा (१) तस्माद्वैतभावेनोपासनाविधानप्रतिपादको योऽर्थः स महत्तत्वार्थः। यद्वा, यस्मिन्नर्थे महदिति ब्रह्म तदेव पञ्चविंशतितत्त्वानां मध्ये वर्त्तमानात् सर्वं खल्विदं ब्रह्मेत्यद्वैतभावेन मुक्तपुरुषाणां भावनीयमिति यथार्थवेदान्तवाक्यप्रतिपादकं यत् ज्ञानं प्रकटीक्रियते स महत्तत्त्वार्थ इति मन्त्रार्थभेदानां निर्णयः॥ अथ द्विजातीनां जपनीयमन्त्रमाह, (प्रश्नः) तत्रास्मिन् स्थाने को मन्त्रः?। (उत्तरम्) वेदप्रतिपादितस्यैव मन्त्रसंज्ञा न त्वन्येषां, तदेव स्पष्टीक्रियते॥ वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः॥ वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥ आहैव स नखाग्रेभ्यः परमन्तप्यते तपः॥ यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्॥ स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ मनुः अ० २।१६६+१६८॥ १॥ पुनर्योगशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम्॥ ब्राह्मणः

(१) इममेवाग्निं महन्तमात्मानमेकात्मानं बहुधा मेधाविनो वदन्तीन्द्रं वरुणमित्यादि। निरु० अ० ७ खं० १८॥ पुनः तैत्तिरीयोपनिषदि। मह इति तद्ब्रह्मेति॥ अनु० ४॥

श्रुतिसम्पन्नः स्वधर्मनिरतः सदा ॥ स वैदिकं जपेन्मन्त्रं लौकिकं न कदाचन ॥ उत्तरार्द्धे अ० ६।१४ ॥२॥ (प्रश्नः) तत् किम्? (उत्तरम्) ओंकार एव । तत्र प्रमाणम् । हंस एव परं वाक्यं हंस एव तु वैदिकमिति ब्रह्मविद्योपनिषदि ॥६१॥ पुनः ॥ हंसप्रणवयोरभेद इति पाशुपतब्रह्मोपनिषदि ॥ प्रणवहंसः परं ब्रह्मेति परब्रह्मोपनिषदि ॥ तेनोमित्येव वैदिकमन्त्रः नान्यः । ओंकार एव गायत्रीमन्त्र इत्याह । ओंकारस्तु परं ब्रह्म गायत्री स्यात्तदक्षरम् ॥ एवं मन्त्रो महायोगः साक्षात्सार उदाहृतः ॥ योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम् । विज्ञायार्थं ब्रह्मचारी (१) स याति परमां गतिम् ॥ न गायत्र्याः परं जाप्यमेतद्विज्ञानमुच्यते इत्यौशनससंहितायाम् । अध्या० ३।५२+५४ ॥ १ ॥ पुनः पातञ्जलयोगसूत्रे । तस्य वाचकः प्रणवः ॥ तज्जपस्तदर्थभावनम् (२) ॥ पाद १ । सू०

---

(१) ब्रह्मचारीति—ब्रह्मचारिणः पञ्चविधा भवन्तीत्याह ॥ पञ्च ह वा एते ब्रह्मचारिणप्रयोऽधीयन्ते, द्वौ पृथगध्वस्तयोर्मुखे हृदय उपस्थ एव पञ्चमः । स यद्दक्षिणेन पाणिनाग्निमन्न स्पृशति तेनाहरहर्याजिनां लोकमवरुन्धे, यत्सव्येन तेन प्रव्राजिना, यन्मुखेन तेनाग्निप्रस्कन्दिनां, यद्धृदयेन तेन शूराणां, यदुपस्थेन तेन गृहमेधिनां, तैश्चेत् स्त्रियं पराहरत्यग्निरिव क्षिप्यते ॥ इति गोपथब्राह्मणे । पू० २।४ ॥ १ ॥

(२) भावनमिति—भावनमुपासनम्—भावनाख्योपासनेति सांख्यप्रवचनभाष्ये । अध्या० ३ सू० २९ ॥ भावस्य प्रयोजनमाह । भावेन लभते सर्वं भावेन देवदर्शनम् ॥ भावेन परमज्ञानं तस्माद्भावावलम्बनम् ॥ इति रुद्रयामलोत्तरतन्त्रे । पट० २।११५ ॥ स त्रिविधो भवतीत्याह । भावत्रयं हि पूजानां रजःसत्त्वतमोमयम् ॥ त्रिभ्रान्तिपूजनं नाथ सर्वत्र परिकीर्त्तितम् ॥ इति रुद्रयामलोत्तरतन्त्रे । पट० ९२।६ ॥ १ ॥ महानिर्वाणतन्त्रे । उत्तमो ब्रह्मसद्भावो ध्यानभावस्तु मध्यमः ॥ स्तुतिर्जपोऽधमो भावो बहिः पूजाधमाधमा ॥ पट० १४।१२१ ॥ पुनः रुद्रयामलोत्तरतन्त्रे । भक्तिप्रधानं भावानां त्रयाणां साधकस्य च ॥ पट० २।१२२ । पुनस्तत्रैव । सर्वेषां मूलभूतञ्च देवीभावं यदा लभेत् ॥ तदैव सर्वसिद्धिश्च सदा ध्यानं दृढीभवेत् ॥ पट० २।११७ ॥

२७+२८ ॥ २ ॥ पुनर्यजुर्वेदस्य माध्यन्दिनसंहितायाम् ॥ ओ३म् क्रतोस्मर क्लिवेस्मर क्रतᳫं स्मर ॥ अध्या० ४० मं० १५ ॥३॥ पुनरीशावास्युपनिषदि ॥ ओम् क्रतोस्मर क्रतोस्मरेति ॥ ४ ॥ पुनर्योगतत्त्वोपनिषदि ॥ ततो रहस्युपाविष्टः प्रणवः प्लुतमात्रया ॥ जपेत् पूर्वार्जितानान्तु पापानां नाशहेतवे ॥ सर्वविघ्नहरो मन्त्रः प्रणवः सर्वदोषहा ॥ एवमभ्यासयोगेन सिद्धिरारम्भसम्भवा ॥ ६३+६४ ॥ ५ ॥ पुनर्योगचूड़ामण्युपनिषदि । वचसा तज्जपेन्नित्यं वपुषा तत्समभ्यसेत् ॥ मनसा तज्जपेन्नित्यं तत्परं ज्योतिरोमिति ॥ शुचिर्वाऽप्यशुचिर्वाऽपि यो जपेत् प्रणव सदा ॥ न स लिप्यति पापेन पद्मपत्रमिवाम्भसा ॥ ८७+८८ ॥ ६ ॥ पुनः संन्यासोपनिषदि ॥ तारं द्वादशसाहस्रमभ्यसेच्छेदनं हि तत् ॥ यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् । तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ॥ अध्या० २।१०४ ॥ ७ ॥ पुनर्योगशास्त्रान्तगतशिवसंहितायाम् ॥ ततो रहस्युपाविष्टः साधकः संयतेन्द्रियः ॥ प्रणवं प्रजपेद्दीर्घं विघ्नानां नाशहेतवे ॥ पटल ३।५७ ॥ ८ ॥ पुनर्योगशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् ॥ प्रभञ्जनं मूर्ध्नि गतं स वह्निं धिया समासाद्य गुरूपदेशात् ॥ मूर्द्धानमुद्भिद्य पुनः खमध्ये प्राणास्त्यजेदोंकारमनुस्मरन्त्वम् ॥ उत्तरार्द्धे । अध्या० १२।३५ ॥ पुनस्तत्रैव पूर्वार्द्धे । माङ्गल्यं पावनं धर्म्मं सर्वकामप्रसाधनम् ॥ ओंकारं परमं ब्रह्म सर्वमन्त्रेषु नायकः ॥ जपेन दहते पापं प्राणायामैस्तथा मलम् ॥ ध्यानेन जन्मनिर्जातं धारणाभिस्समुच्यते ॥ वाच्यः स ईश्वरः (१) प्रोक्तो वाचकः प्रणवस्मृतः ॥ वाचकेऽपि च विज्ञाते

(१) ईश्वर इति—ईश्वरः गायत्री । तत्र प्रमाणम् । गायत्रीमीश्वरं ज्ञात्वा मुच्यते नात्र संशयः ॥ इति भृङ्गीशतन्त्रे ॥ पुनर्देवीभागवतान्तर्गत भगवतीगीतायाम् । ईश्वरोऽहञ्च सूत्रात्मा विराडात्माहमस्मि च ॥ अध्या० ३।१३ ॥

वाच्य एव प्रमोदति ॥ जायन्ते प्रणवाद्वेदा: (१) प्रणवे पर्य्युपस्थिता: ॥ वाङ्मयं (२) प्रणव: सर्वं तस्मात् प्रणवमभ्यसेत् ॥ एक एव तु विज्ञेय: प्रणवो योगसाधनम् ॥ गृहीतं सर्वसिद्धान्तैरितरैर्ब्रह्मवादिभि: ॥ ९ ॥ पुनारुद्रयामलोत्तरतन्त्रे । प्रणवान्तं महाहंसं (३) नित्यं जपति यो नर: ॥ वायुसिद्धिर्भवेत्तस्य वायवी सुक्षता भवेत् ॥ पट० २२।१०२ ॥ १० ॥ पुनर्गुप्तसाधनतन्त्रे । प्रणवं निष्कलं साक्षाद्ब्रह्मविष्णुशिवात्मकम् ॥ प्रणवंप्रजपेद् यस्तु स साक्षाद्विष्णुरूपधृक् ॥ ओंकारस्त्रिगुणं देवि ! गुणातीतंतु निष्कलम् ॥ पट० ११ ॥ ११ ॥ पुनर्देवीपुराणे । गायत्र्या योगसिद्ध्यर्थं जपं कुर्य्यात् समाहित: ॥ वाचिकं बाह्यजप्तं वा भक्त्या मानसमेव च ॥ जप्यन्तु चिन्तयेन्नित्यं न च शून्यो भवेद्द्विज: ॥ स्थित्वा कालान्तरं किञ्चिदोमित्ये तदनुस्मरेत् ॥ अध्या० १० ॥ १२ ॥ तेनोंकार एव मन्त्र इति सिद्धम् ॥ (प्रश्न:) कस्मात् ? । (उत्तरम्) मन्त्रो मननात् । निरु० दै० । १।१२ ॥ पुन: कुलार्णवतन्त्रे । मननात्तत्त्वरूपस्यामितदेवस्य तेजस: ॥ त्रायते सर्वभरतस्तस्मान्मन्त्र इतीरित: ॥ उल्ला० १७ ॥१॥ पुनर्गौतमीयतन्त्रे । मननं विश्वविज्ञानं त्राणं संसारबन्ध-

---

(१) जायन्ते प्रणवाद्वेदा इति—प्रणव: गायत्री तस्या मुखाद्वेदा: जायन्ते, यद्वा, प्रणव: गायत्र्या ज्योतिस्वरूपम् तस्मात् ऋग्यजुसामादिसंज्ञका: गुणभेदेन गायत्र्या सगुणरूपा जायन्ते ॥

(२) वाङ्मयमिति—वाङ्मयं गायत्रीमयम् । तत्र प्रमाणम् ॥ गायत्री वा इदँ सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदँ सर्वं भूतं गायति त्रायते च ॥ इति छान्दोग्योपनिषदि ॥ ३।१२।१ ॥ पुन: गोपथब्राह्मणे । वाग्वै सरस्वती ॥ उत्त० १।२० ॥ पुन: सर्वैव । वाक् सावित्री । पू० १।३३ ॥ १ ॥ पुन ऐतरीयब्राह्मणे । वागेव सरस्वती ॥ २।४।२४ ॥ अतएव वाक्शब्देन गायत्रीति सिद्धम् ॥

(३) महाहंसमिति—महाहंसं सोऽहमजपागायत्रीमन्त्र इत्यर्थ: ॥

नात् ॥ पुनः करोति संसिद्धिं मन्त्र इत्युच्यते समा ॥ अध्या० २ ॥ २ ॥ पुनर्गन्धर्वतन्त्रे ॥ अज्ञानाद्विश्वविज्ञानं त्राणं संसारबन्धनात् ॥ यतः करोति संसिद्धौ मन्त्र इत्युच्यते समा ॥ पट० २६ ॥३॥ यद्वा, गायत्र्योंकारः (१) तस्याः उपासनाविधिः प्रतिपादिको चतुर्विंशाक्षरो गायत्रीछन्दभेदः सावित्री मन्त्र इति मन्त्रो ज्ञातव्यः ॥ (प्रश्नः) तत् किम् ? ॥ (उत्तरम्) व्याहृतित्रययुक्तः तत्सवितुरित्यादि (२) ॥ अथ मन्त्रार्थमाह, (प्रश्नः) को मन्त्रार्थः ? ॥ (उत्तरम्) गायत्र्या ध्यानमेव मन्त्रार्थः ॥ तत्र प्रमाणम् ॥ मन्त्रार्थं परमेशानि ! सावधानावधारय ॥ आधारे चिन्तयेद्विद्यां (३) शुद्धस्फटिकसन्निभाम् ॥ बन्धूकरुचिरां लिङ्गे नाभौ स्फटिकसन्निभाम् ॥ हृदये मरकतश्यामां हरिद्वर्णां (४) विशुद्धके ॥ आज्ञायां चिन्तयेद्विद्यां चतुर्वर्णानुरञ्जिताम् (५) ॥ ध्यानेन परमेशानि ! यद्रूपं समुपस्थितम् ॥ तदेव परमेशानि ! मन्त्रार्थं विद्धि पार्वति ! ॥ इति गन्धर्वतन्त्रे ।

---

(१) गायत्र्योंकारः । तत्र प्रमाणम् । ओमिति ब्रह्मेति । तैत्तिरीयोपनिषदि । ८।१ ॥ ब्रह्मगायत्रीति शतपथब्राह्मणे ॥ ६।६।२।७ ॥ अतएवोंकारशब्देन गायत्रीति सिद्धम् ॥

(२) सावित्रीमन्त्रोद्धारमाह । श्रावयित्वा त्रिधा तारं सर्वमन्त्रमयं शिवे ! ॥ व्याहृतित्रयमुच्चार्य्य सावित्रीं श्रावयेद्गुरुः ॥ आदौ तत्सवितुः पश्चाद्वरेण्यपदमुच्चरेत् ॥ भर्गः पदान्ते देवस्य धीमहीति पदं वदेत् ॥ ततस्तु परमेशानि ! धियो यो नः प्रचोदयात् ॥ पुनः प्रणवमुच्चार्य्य सावित्र्यर्थं गुरुर्वदेत् ॥ इति महानिर्वाणतन्त्रे सावित्रीमन्त्रोपदेशप्रकरणे । उल्ला० ३।३२ ॥ तेन, तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति सावित्रीमन्त्रमिति सिद्धम् ॥

(३) कस्माद्गायत्री विद्येत्युच्यते । विद्यते सर्वकामानि तस्माद्विद्या परा मतेति देवीपुराणे अध्या० ९१ ॥

(४) हरिद्वर्णामिति । हरिद्वर्णमस्यास्तीति हरिद्वर्णा ।

(५) चतुर्वर्णानुरञ्जितामिति । चतुर्वर्णमकारोकारमकारनादविन्द्विति तेनानुरञ्जितामोंकारस्वरूपमित्यर्थः ॥

उल्ला० २९॥ पुनारुद्रयामलोत्तरतन्त्रे अद्वैतभावनायां शिववाक्यम् ॥ अहं गुरुरहं देवो मन्त्रार्थोऽहं न संशयः ॥ पट० १।१९२ ॥ तेन गायत्र्या ध्यानमेव मन्त्रार्थं इति सिद्धम् ॥ अथ प्रणवव्याहृतित्रययुक्तम् सावित्रीमन्त्रार्थमाह ॥ तस्य ( सवितुः ) सूर्यादिमण्डलान्तर्गत । षुप्रसवैश्वर्ययोः [ धा० २४।४३ ] वा षूप्रेरणे, सुवति स्वस्वव्यापारे प्रेरयति यः सः सविता ॥ (प्रश्नः) तत्र कस्सविता ? ॥ (उत्तरम्) सविता वै सर्वस्य प्रसवितेति निरु० दै० अ० ४ खं० ३१ ॥ सविता वै प्रसवानामीशे सवितारमेव ॥ कृ० यजु० ॥ २। १।७।२ ॥ असौ वै आदित्यो देवः सवितेति शतपथब्राह्मणे ६।२। १।१० ॥ आदित्योऽपि सवितेवोच्यतेति निरु० दै० ४।२१ ॥ सवितापदनामसु पठितम् । निघण्ट अध्या० ५ खं० ६ ॥ इममेवाग्निस्सवितारमाह सर्वस्य प्रसवितारम् ॥ निरु० दै० अ० १।२१ ॥ चन्द्रमाः सविता, प्राण एव सविता, विद्युदेव सविता ॥ इति गोपथब्राह्मणे ॥ पू० ५।२२ ॥ तेन सवितृशब्देन सूर्यादयो गृह्यन्ते ॥ [कथम्भूतस्य सवितुः] (देवस्य) "देव, पु० दिव-पचाद्यच् । अमरे, द्योतनात्मके, आत्मनि, परमेश्वरे, ब्राह्मणस्योपाधौ च । इन्द्रिये न० । पूज्ये त्रि० । नाट्योक्तौ राजनीति शब्दस्तोममहानिधौ ॥ देवः पदनामसु पठितम् ॥ निघ० अध्या० ५।६ ॥ (प्रश्नः) कस्माद्देवः ? ॥ (उत्तरम्) देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थाने भवतीति वा ॥ निरु० दै० प० १ खं० १ ॥ दीव्यते क्रीडते यस्माद्रोचते द्योतते दिवि ॥ तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥ इति याज्ञवल्क्यवचनम् ॥ अत्र तु देवशब्दः प्रकाशे विशिष्टस्तेन देवस्य" प्रकाशमानस्य ( तद्गर्गः ) तत्तेजो गायत्र्याः स्वरूपम् । "तदित्यव्ययम्, भर्ग इति-भ्रस्जो आमर्दने, भ्रजी भर्जने इत्ये-

तयोर्धात्वोर्भर्गः । [यद्वा, भ्रस्जपाके "त० उ०" असुन् । भ्रस्जो-रुपधयोरमन्तरस्याम् । ६।४।४७ । इति उपधयोर्लोपोरमागमश्च न्यङ्क्वादिपाठात् कुत्वम् । ७।३।५२ । वा, भ्रस्जं जियुजि उ०४ । २२३ । इति भृजधातोरसुन्प्रत्ययः कवर्गादेशश्च] भर्ज्जन्ति न-श्यन्ति पापानि संसारजन्मजरामरणादिदुःखमूलानि येन तद्भर्गः ॥ (प्रश्नः) को भर्गः ? ॥ (उत्तरम्) गायत्र्याः स्वरूपमेव ॥ तत्र प्रमाणम् ॥ गायत्र्येव भर्गः ॥ गो० ब्रा० पू० ५।१५ ॥ पुनाश्चद्र्या-मलान्तर्गतगायत्रीसहस्रनाम्नि ॥ भर्गात्मिका [भर्गस्वरूपा] भद्र-दायी भद्रकाली भयङ्करी ॥ यद्वा, "भ्राजृदीप्तौ तेन गायत्र्यास्तेजः स्वरूपमेव भर्गः ॥ तत्र प्रमाणम् ॥ तेजो वै ब्रह्मवर्च्चसं गायत्री तेजस्वी वर्च्चस्वी भवति ॥ ऐत० ब्रा० १।१।५ ॥ पुनस्तत्रैव ॥ यो वै गायत्रीं पक्षिणीं चक्षुष्मतीं ज्योतिष्मतीं भास्वतीम्वेद, गायत्र्या पक्षिण्या ज्योतिष्मत्या भास्वत्या स्वर्गलोकमेति ॥ ४।४।२२ ॥ पुन-स्तैत्तिरीयसंहितायाम् ॥ तेजो वै गायत्री तेज एवात्मानं धत्ते ॥ १।५।८।२॥२॥१॥ पुनर्गोपथब्राह्मणे ॥ तेजो वै गायत्री ॥ उत्त० ५। २ ॥ पुनस्तत्रैव ॥ अथ गायत्रीं हरिणीं ज्योतिष्पक्षां सर्वैर्यज्ञैर्यज-मानं स्वर्गलोकमभिवहन्तीं विद्यात् ॥ पू० ३।७ ॥ २ ॥ पुनर्वेदा-न्तसूत्रे ॥ ज्योतिश्चरणाभिधानात् ॥ भूतादिपादव्यपदेशोपपत्ते-श्चैवम् ॥ पा० १ । सू० २६+२७ ॥३॥ पुनर्योगशास्त्रान्तर्गतयाज्ञ-वल्क्यसंहितायाम् ॥ ललाटमध्ये हृदयाम्बुजे वा यः पश्यति ज्ञान-मयीं प्रभां तु ॥ शक्तिं यदा दीपवदुज्ज्वलन्तीं पश्यन्ति ते ब्रह्म तदेकदृष्टाः ॥ उत्तरार्द्धे० अ० १२।२५ ॥ ४ ॥ पुनर्निरुत्तरतन्त्रे ॥ सगुणज्योतिषां मूर्त्तिं हृदिस्थां कालिकां स्मरेत् ॥ पट० ३ ॥ ५ ॥ पुनर्वृहन्नीलतन्त्रे ॥ प्रदीपकलिकाकारं प्रकृतिं विद्धि पार्वति ! ॥

तत्र तेजसि देवेशि ! अन्तरात्मा सदा स्थित: ॥ पट० ८ ॥ पुनस्त-त्रैव ॥ अतस्तु तारिणी देवी मम तेज: स्वरूपिणी ॥ प० ५ ॥६॥ पुनर्गन्धर्वतन्त्रे ॥ तदेव प्रकृति: सा तु तेजोरूपा सनातनी ॥ नित्यानन्दवपुर्देवि ! तद्रूपा तत्प्रकाशिनी ॥ पट० ११ ॥७॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ सर्वदेवार्च्चितां विद्यां तेज:पुञ्जप्रपू-रिताम् ॥ तेजोमयीं जगत्सर्वां विभाव्यमूर्त्तिकल्पनाम् ॥ तत्तन्मूर्त्ति-मयै रूपै: स्नेहशून्येन वा पुन: ॥ आत्मानं तन्मयं कृत्वा सर्वभावं तथैव च ॥ तत्सर्वां योषितां ध्यात्वा पूजयेद् यतमानस: ॥ पट० ६।८०+८२ ॥ ८ ॥ पुनाराजयोगान्तर्गतब्रह्मज्ञानतन्त्रे ॥ एका-त्मिकां विन्दुरूपां न स्थूलां नैव सूक्ष्मिकाम् ॥ सुषुम्नान्तर्गतां सूक्ष्मा-मेवभूतां विचिन्तयेत् ॥ विद्युदनलसङ्काशां सहस्रादित्यभासि-ताम् ॥ परापरसमायुक्तां निराकारां निरालयाम् ॥ पट० ६ ॥८॥ तेनात्र भर्ग: शब्देन गायत्र्या ज्योति:स्वरूपमिति सिद्धम् ॥ (प्रश्न:) कस्माद्गायत्री भर्ग: ? ॥ (उत्तरम्) भ्रस्जपाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ (२) ॥ भ्राजते दीप्यते यस्माद् जगदन्ते हरत्यपि ॥ १ ॥ कालाग्निरूपमास्थाय सप्तार्च्चि: सप्तरश्मिभि: ॥ भ्राजते तत्स्व-रूपेण (३) तस्माद्भर्ग: समुच्यते ॥ २ ॥ भेति भासयते लोकान् रेति रञ्जयते प्रजा: ॥ ग इत्यागच्छ तेजस्त्वं भरगो भर्ग उच्यते ॥ इति याज्ञवल्क्यप्रवचनम् ॥ १ ॥ पुनर्मैत्रायणोपनिषदि ॥ अथ भर्ग इति "भ" भासयतीमाल्लोकानिति "र" रञ्जयतीमानि भूतानीति "ग" गच्छत्यस्मिन्नागच्छत्यस्मादिमा: प्रजास्तस्माद्भारगत्वाद्भर्ग: ॥ प्रपा० ५।७ ॥ अथ पापभञ्जनताग्रहेतुभूतम् गायत्र्या: स्वरूपमेव

---

(१) भर्गाख्यमिति—भर्ग: शब्देनास्मिन्मन्त्रे गायत्र्येवोपासनीया, कस्मात् ? गायत्र्या उपासनाया: प्रकरणत्वात् ॥ तत्र प्रमाणम् ॥ जनीयन्तोन्वग्रव: पुत्रीयन्त: सु-

भर्गाख्य(१)मिति स्पष्टीक्रियते॥ पावकानः सरस्वती (१) वाजेभि-र्वाजिनीवती॥ यज्ञं वष्टु धियावसुः॥ इति यजु० अध्या० २० मं० ८४॥ सामवेदे अ० २ खं० ८ प्र० २ अर्द्ध २० द० प्र० ऋ० ५॥ ऋग्वेदे। मण्ड० १। अध्या० ३ सू० ३ ऋ० १०॥१॥ पुनर्दे-व्याथर्वशीर्षे॥ कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम्॥ सर-स्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम्॥२॥ पुनरै-त्तरीयब्राह्मणे॥ अष्टाक्षरा वै गायत्री गायत्र्या वै देवाः पाप्मानं शमलमाघ्नत गायत्रैवास्य तत्पाप्मानं शमलमपहन्तीति॥ पं० २।२।१७॥३॥ पुनर्गोपथब्राह्मणे॥ तेजो वै गायत्रीतमः पाप्मा रात्रिस्तेन तेजसा [गायत्र्याः प्रादुर्भावेन] तमः पाप्मानं तर-न्तीति॥ उत्त० ५।५॥४॥ पुनः शङ्खसंहितायाम्॥ गायत्री चैव जननी गायत्री पापनाशिनीति॥ अध्या० ११।१२॥५॥ तेन गायत्र्याः स्वरूपमेव पापभञ्जनहेतुभूतत्वमिति सिद्धम्॥" तद्भ-र्गाख्यम् (ओम्) ब्रह्म (२)॥ तत्र प्रमाणम्॥ ओमिति ब्रह्मेति॥ तैत्तिरीयोपनिषदि॥ ८।१॥१॥ ब्रह्मगायत्रीति। शतपथब्रा०

---

दानवाः सरस्वन्तꣳ हवामहे॥१॥ उतनः प्रिया प्रियासु सप्त-स्वसा सुजुष्टा सरस्वती स्तोम्याभूत्॥२॥ तत्सवितुर्वरेण्यम्०॥

सामवेदे॥ अ० १३ खं० ४ प्र० ६ अर्द्ध ३ सू० १० ऋ० "८।८।१०"॥

(१) सरस्वतीति—सरस्वतीशब्देन सायंकाले उपासनीयम् गायत्र्याः स्वरूपमिति बोधव्यम्॥ तत्र प्रमाणम्॥ गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने॥ सरस्वतीति सायाह्ने सैव सन्ध्या [गायत्री] त्रिधा स्मृतेति याज्ञवल्क्यवाक्यम्॥

(२) ओम् ब्रह्मेति—ओङ्कार एव ब्रह्मणस्तेजः स्वरूपम्॥ तत्र प्रमाणम्॥ ध्यायेत्तु ओमयं ब्रह्म तेजो ध्यानं परापरम्॥ भ्रुवोर्मध्ये मनोर्द्ध्वं च यत्तेजः प्रणवात्मकम्॥ ध्यायेज्ज्वालाव-लीयुक्तं तेजो ध्यानं तदेव हि॥ इति योगशास्त्रान्तर्गत घेरण्डसंहितायाम्॥ उप० ६।१७॥

६।६।२।७ ॥ पुनस्तत्रैव ॥ गायत्री तद्ब्रह्मैव तदस्य सर्वस्योत्तमं करोति, तस्माद्ब्रह्मास्य सर्वस्योत्तममित्याहुः ॥ श० ब्रा० १४।६।२।७ ॥ २ ॥ पुनरैत्तरेयब्राह्मणे ॥ ब्रह्म वै गायत्री ब्रह्मणैवैनं नमस्यति ॥ ३।३।२४ ॥३॥ तेनौम्शब्देन ब्रह्म वा गायत्रीति सिद्धम् ॥ अथोमिति ब्रह्मणो रूपमिति स्पष्टीक्रियते ॥ द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं चाथ यन्मूर्त्तं तदसत्यं यदमूर्त्तं तत्सत्यं तद्ब्रह्म, यद्ब्रह्म तज्ज्योतिर्यज्ज्योतिः स आदित्यः स वा ओमित्येतदात्मा स त्रेधात्मानं व्यकुरुत ओमिति तिस्रो मात्रा एताभिः सर्वमिदमोतं प्रोतं चैवास्मिन्नित्येव ह्याहैतद्वा आदित्य ओमित्येवं ध्यायं स्वात्मानं युञ्जीतेति ॥ मैत्रायणोपनिषदि ॥ प्रपा० ५।२ ॥ १ ॥ पुनर्मण्डलब्राह्मणोपनिषदि ॥ तारकम् [ ओंकारम् ] द्विविधम् । मूर्त्तितारकममूर्त्तितारकमिति । यदिन्द्रियान्तं तन्मूर्त्तितारकम् । यद्भ्रूयुगातीतं तदमूर्त्तितारकम् ॥ ब्रा० १।२ ॥२॥ पुनर्द्वं तारकोपनिषदि ॥ तारकम् द्विविधम् मूर्त्तितारकममूर्त्तितारकम् चेति । यदिन्द्रियाऽन्तं तन्मूर्त्तिमत् । यद्भ्रूयुगातीं[illegible] तद्मूर्त्तिमत् ॥ २ ॥ (प्रश्नः) कस्माद्गायत्र्योङ्कारः ? ॥ (उत्तरम्) [illegible] ॥ १ दुच्चार्य्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते [illegible] तत्स्व[illegible]रेति इति शिवाथर्वशीर्षे ॥ कस्माद्गायत्रीत्युच्यते । गा=स्तु[illegible] ० तं[illegible] स्तुतिकरणाद् या द्विजातीनां त्रायति रक्षति वा, य[illegible]त, गा=जन्मनि अक्० तेन या सर्वभूतानां जन्मयित्री भूत्वास्माकम् स्वपुत्रानिव त्रायति रक्षति सा गायत्रीति बोधव्या ॥ पुनर्यास्केनाऽप्युक्तम् ॥ गायत्री गायति स्तुति कर्म्मणा त्रिगमनावेति ॥ निरु० अ० १ । खं० १२ ॥ १ ॥ पुनः शतपथब्राह्मणे ॥ प्राणो वै गयास्तत्प्राणाꣳस्तत्रे तद्यद् गयां स्तत्रे तस्माद्गायत्रीनाम ॥ १४।८।

१।६ ॥ २ ॥ पुनर्बृहदारण्यकोपनिषदि । सहैषा गयांस्तत्रे प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यद्गयांस्तत्रे तस्माद्गायत्रीनाम ॥ ७। ३।४ । तत्र भाष्यम् । सैषा गायत्री प्राणाः अतः गायत्र्यां जगत् प्रतिष्ठितम् यस्मिन् सर्वे देवा एकी भवन्ति सर्वे वेदाः कर्म्माणि फलानि च सैषा गायत्री प्राणरूपा सती जगत् आत्मा सहैषा गयांस्तत्रे त्रायती, कम् ? पुनर्गयाः एते प्राणा वागादयो वै गयः शब्दकरणात्, तान् तत्रे, सैषा गायत्री तत्तत्र यस्मात् गयां स्तत्रे तस्माद्गायत्रीनाम गायत्राणात् गायत्रीति प्रथितेति शंकरभाष्यम् ॥ ३ ॥ ऐत्तरेयब्राह्मणे । गयान् प्राणान् त्रायते सा गायत्रीति ॥ ४ ॥ पुनः ॥ प्रतिग्रहादन्न दोषाच्च पातकादुपपातकात् ॥ गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यत इति याज्ञवल्क्यवाक्यम् ॥५॥ पुनर्भरद्वाजस्मृतौ ॥ दुष्प्रतिग्रहदुर्भक्ष्यरूपां छोर्य्योऽनिशं द्विजम् ॥ गायन्तं त्रायते यस्मात् गायत्रीति स्मृता ततः ॥ ६ ॥ पुनर्गायत्रीतन्त्रे प्रथमब्राह्मणपटले ॥ मूलादिब्रह्मरन्ध्रान्तं गीयते मननादृयतः ॥ मननात्त्राति षट्चक्रं गायत्री तेन कीर्त्तिता ॥ ७ ॥ अथोंकारविशिष्टा गायत्र्युपासनीयेति स्पष्टीक्रियते ॥ युञ्जीतप्रणवे चेतः प्रणवो ब्रह्मनिर्भयम् ॥ प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ इति माण्डूकोपनिषदः कारिकायाम् ॥ २५ ॥ पुनस्तत्रैव ॥ अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ॥ ओंकारो विदितो येन स मुनिर्नेतरो जनः ॥ २९ ॥ १ ॥ पुनश्छान्दोग्योपनिषदि ॥ ओमित्येतदक्षरमुद्गीथमुपासीत ॥ खण्ड ।१।१॥ तत्र भाष्यम् । ओंकारो भूतादीनामुत्तरोत्तररसानामतिशयेन रसो रसतमः परमात्मप्रतीकत्वात्परार्द्ध्यः [अर्द्धं स्थानं परञ्च तदर्द्धञ्च तदर्हतीति परार्द्ध्यः] परमात्मा स्थानार्हः । परमात्मवदुपा-

स्यत्वादित्यभिप्राय इति शङ्करभाष्यम् ॥ २ ॥ पुनर्गर्भोपनिषदि। पञ्चात्मकं समर्थः पञ्चात्मिकाचेतसा बुद्धिर्गन्धरसादिज्ञानाचरा-चरमोंकारं चिन्तयति ॥ ४ ॥ ४ ॥ पुनर्योगतत्त्वोपनिषदि। त्रयो लोकास्त्रयो वेदास्त्रयः सन्ध्यास्त्रयः सुराः ॥ त्रयोऽग्नयो गुणा-स्त्रीणि स्थिताः सर्वे त्रयाक्षरे ॥ त्रयाणामक्षरं प्रान्ते योऽधीते-ऽप्यर्द्धमक्षरम् ॥ तेन सर्वमिदं प्राप्तं लब्धं तत् परमं पदम् ॥ ६+७ ॥ ४ ॥ पुनर्नारायणोपनिषदि ॥ ओमित्यात्मानं युञ्जीतै तद्वै महोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमा-प्नोति ॥७२॥५॥ पुनरमृतनादोपनिषदि॥ ओंकाररथमारुह्य विष्णुं कृत्वाथ सारथिम् ॥ ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २ ॥ ६ ॥ पुनरथर्वशिखोपनिषदि ॥ अथ हैनं पैप्पलादोऽङ्गिराः सनत्कु-मारश्चाथर्वणमुवाच ॥ भगवन्! किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं, किं तद्ध्यानं को वा ध्याता कश्च ध्येयः स एभ्योऽथर्वा प्रत्युवाच ॥ ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमित्येतदक्षरं परं ब्रह्मास्य पादाश्चत्वारो वेदाश्चतुष्पादिमक्षरं परं ब्रह्म ॥७॥ पुनः-शुकरहस्योपनिषदि। श्रीवेदव्यास उवाच। यथा तथा वा भवतु ह्युपनयनकर्मणि ॥ उपदिष्टे मम सुते ब्रह्मणि त्वत्प्रसादतः ॥ सर्वज्ञो भवतु क्षिप्रं मम पुत्रो महेश्वर!॥ तव प्रसादसम्पन्नो लभे-न्मुक्तिं चतुर्विधाम् ॥ तच्छ्रुत्वा व्यासवचनं सर्वदेवर्षिसंसदि ॥ उपदेष्टुं स्थितः शम्भुः साम्बो दिव्यासने मुदा ॥ कृतकृत्यः शुक-स्तत्र समागत्य भक्तिमान् ॥ तस्मात्सप्रणवं लब्ध्वा पुनरित्यब्रवीच्छि-वम् ॥ ५+८ ॥८॥ पुनर्नादविन्दूपनिषदि। ब्रह्मप्रणवसंलग्ननादो ज्योतिर्मयात्मकः ॥ मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ॥ ४७ ॥ ९ ॥ पुनर्ध्यानविन्दूपनिषदि ॥ ओमित्येकाक्षरं ब्रह्म ध्येयं

सर्वमुमुक्षुभिः ॥ ९ ॥ पुनस्तत्रैव । ओंकारं यो न जानाति ब्राह्मणो न भवेत्तु सः ॥१०॥ पुनरात्मबोधोपनिषदि ॥ ओम् प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपं अकारोकारमकार इति त्र्यक्षरं प्रणवं तदेतदोमिति, एवमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥ १ ॥ ११ ॥ पुनर्मण्डलब्राह्मणोपनिषदि ॥ भ्रूमध्ये सच्चिदानन्दं तेजःकूटरूपं (१) तारकं ब्रह्म । तदुपायं लक्ष्यत्रयावलोकनम् ॥ ब्रा० १।२ ॥१२॥ पुनारामोत्तरतापिन्युपनिषदि ॥ अथ हैनं भरद्वाजः, पपृच्छत याज्ञवल्क्यं, किं तारकं तारयतीति । सहोवाच याज्ञवल्क्यस्तारकम् । अकारः प्रथमाऽक्षरो भवति, उकारो द्वितीयाऽक्षरो भवति, मकारस्तृतीयाक्षरो भवति, अर्द्धमात्रश्चतुर्थोऽक्षरो भवति, बिन्दुः पञ्चमाऽक्षरो भवति, नादः षष्ठाऽक्षरो भवति । तारकत्वात् तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि, तदेवोपासितव्यमिति ज्ञेयम् । गर्भजन्मजरामरणसंसारमहद्भयात्सन्तारयतीति, तस्मादुच्यते षडक्षरं तारकमिति । य एतत्तारकं ब्रह्म ब्राह्मणो नित्यमधीते स पाप्मानं तरति ॥ १३ ॥ पुनः पाशुपतब्रह्मोपनिषदि ॥ हंसस्य [ ओंकारस्य ] प्रार्थना त्रिकालाः ॥ त्रिकालास्त्रिवर्णाः ॥ ब्रह्मप्रवृत्तौ तत्प्रणवहंससूत्रेणैव ध्यानमाचरन्ति ॥ १४ ॥ पुनस्तारसारोपनिषदि ॥ ओमित्येतदक्षरब्रह्म, तदेवोपासितव्यम् । पा २।१ ॥ १५ ॥ पुनः पैङ्गलोपनिषदि ॥ इदं ज्ञानमिदं ज्ञेयं तत्सर्वं ज्ञातुमिच्छति ॥ अपि वर्षसहस्राऽऽयुः शास्त्रान्तं नाऽधिगच्छति ॥ विज्ञेयोऽक्षर( २ )त-

---

(१) कूटरूपमिति —कूटरूपमोंकारस्वरूपमित्यर्थः ।

(२) अक्षरतन्मात्रमिति—अक्षरोंकारः तन्मात्रेण ब्रह्मणः स्वरूपेण तेनोंकार एव ब्रह्मस्वरूपेण चिन्तनीयमित्यर्थः ॥ यद्वा अक्षरा गायत्री तदेव ब्रह्मस्वरूपेण चिन्तनीयेत्यर्थः ॥

त्मानो जीवितं वाऽपि चञ्चलम्॥ विहाय शास्त्रजालानि यत्सत्यं तदुपास्यताम्॥ अध्या० ४।१६॥ १६॥ पुनर्योगशिखोपनिषदि॥ मनः सर्वत्र संयम्य ओंकारं तत्र चिन्तयेत्॥ ध्यायेत् सततं प्राज्ञो-हृदि कृत्वा परमेष्ठिनम्॥ २॥ १७॥ पुनाराजयोगान्तर्गतब्रह्म-ज्ञानतन्त्रे। प्रणवं मूर्ध्नि संध्यायन् मनसा प्रणवं जपेत्॥ तमो-माया महादेवः प्रकाशयति सर्वदा॥ पट० ६॥ १८॥ पुनर्महा-भारतान्तर्गतभगवद्गीतायाम्॥ सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च॥ मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्॥ यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥ अध्या० ८।१२+१३॥ १९॥ पुनर्देवी-पुराणे योगपरिशिष्टे नारदं प्रति सनत्कुमारवाक्यम्॥ ध्यायमा-नस्तु ओंकारं प्राणैर्यदि वियुज्यते॥ तस्य तत् परमैश्वर्यं भिन्ने देहे प्रवर्त्तते॥ ओंकारेण विशुद्धात्मा परं ब्रह्माधिगच्छति॥ परे ब्रह्मणि सन्न्यस्य संसाराद्विप्रमुच्यते॥ अध्या० १०॥ २०॥ पुनः पद्मपुराणान्तर्गतशिवगीतायाम् रामचन्द्रं प्रति शिववाक्यम्। वदन्ति यत्पदं वेदाः शास्त्राणि विविधानि च॥ सर्वोपनिषदां सारं दध्नो घृतमिवोद्धृतम्॥ यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति मुनयः सदा॥ तत्ते पदं संग्रहेण ब्रवीम्योमिति यत्पदम्॥ एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम्॥ एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥ एतदालम्बनम् [साकाररूपेणोपासनम्] श्रेष्ठमेतदालम्बनं परम्॥ एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥ अध्या० १५। १०+१३॥ २१॥ पुनः कपिलगीतायाम्॥ ओंकारं विन्दु [शिव] संयुक्तं नित्यं ध्यायन्ति योगिनः॥ यस्मिन् मध्ये स्थितं तत्त्वं [शिव-स्वरूपम्] दर्शयन्ति जगद्गुरुम्॥ अध्या० २।२॥ २२॥ पुनर्म-

महाभारतान्तर्गतवनपर्वणि युधिष्ठिरं प्रति मार्कण्डेयवाक्यम्। एकाक्षराभिसम्बन्धन्तत्त्वं हेतुभिरिच्छसि॥ बुद्धिर्न तस्य सिध्येत साधनस्य विपर्य्ययात्॥ अध्या० १९९।११३॥ २३॥ तेनोंकार एवोपासनीय इति सिद्धम्॥ (प्रश्नः) ओंकारे द्विजातीनां का देवतोपासनीया?॥ (उत्तरम्) गायत्र्येव॥ तत्र प्रमाणम्॥ ओमित्येतदक्षरमपश्यत्॥ इति गोपथब्राह्मणे। पू० १।१६॥ पुनस्तत्रैव। गायत्री वै देवानामेकाक्षरा श्वेतवर्णा च व्याख्यातेति॥ पू० १।२७॥ पुनस्तत्रैव। प्रातः सवने युज्येताङ्गचेष्ट एव तस्य ग्रस्तं गायत्र्याऽरूपेण॥ उत्त० ३।११॥ १॥ पुनर्वृहन्नीलतन्त्रे। गायत्री ब्रह्मरूपा च तत्सदोंकारपीठगे॥ पट० ५॥ २॥ पुनारुद्रयामलोत्तरतन्त्रे। महाकुण्डलिनीं (१) ध्येयां ब्रह्मविष्णुशिवादिभिः॥ प्रणवान्तस्थितां शुद्धां शुद्धज्ञानाश्रयां शिवाम्॥ पट० २६।२५॥ ३॥ पुनर्देवीभागवतान्तर्गतदेवीगीतायाम्॥ योगवृत्ते पुरा स्वस्मिन् भावयेदक्षरत्रयम्॥ देवीप्रणवसंज्ञस्य ध्यानार्थं मन्त्रवाचयोः॥ अध्या० ४।४० तत्र नीलकण्ठोऽप्याह। इत्थं निदिध्यासनाभ्यासेन यदा समाधियोग्यता चित्तस्य भवति, तदा समाधिः पूर्वमित्यं ध्यानं कृत्वा समाधिं कुर्य्यादित्याह योगवृत्तेरिति समाधिवृत्तेः पुरा पूर्वं स्वशरीरे देवी प्रणवसंज्ञस्य मायावीजं मन्त्रस्याक्षरत्रयं वक्ष्यमाणं भावयेत् मन्त्रवाच्यः मायावीज- (२)-मन्त्रार्थयोः समष्टिव्यष्टिध्यानार्थमित्यर्थः॥ ४॥ पुनाराजयोगान्तर्गतब्रह्मज्ञानतन्त्रे॥ इड़याकर्षयेद्वायुं बाह्यं षोड़शमा-

---

(१) महाकुण्डलिनीमिति—कुण्डलिनीं गायत्रीत्यर्थः॥

(२) मायावीजमिति—मायावीजं, तामग्निवर्णामिति वेदमन्त्रेण प्रतिपादितां ह्रीं वीजमित्यर्थः॥

त्रकम् ॥ प्राणादिदशवायुश्च गोचुरो घनदीपमा ॥ आधारे [गायत्र्याः स्थाने] च मनः कृत्वा श्मेढ्योनिगतं प्रिये ! ॥ यतः कालानलप्रख्यं विद्युत्सूर्य्यप्रभं स्मरेत् ॥ अकारमुक्तिरक्ताङ्गीं गायत्रीं हंसवाहिनीम् ॥ चतुर्भिः स्वर्गुणैर्वर्णैः प्रबध्वा श्वासवाहिना ॥ उद्घाटयेत् कपाटञ्च यथा कुञ्चिकया हठात् ॥ मेढ्रयोनिसमायुक्तं लिङ्गमाकुञ्चनं प्रिये ! ॥ शुचिवद् गुणमादाय वायुर्वायुमुखेन तु ॥ ओंकाररूपां शिखां सूक्ष्मामम्बिकां चिद्रूपिणीम् ॥ चिन्तयन्तीं परावस्थां जिह्वोष्ठदशनैर्दृढम् ॥ सूक्ष्मया सह चात्मानमेकीकृत्य विचिन्तयेत् ॥ पट० ६ ॥ ५ ॥ अतोंकारशब्देन गायत्रीदेवतोपासनीयेति सिद्धम् ॥ तेनोम् (धीमहि) ध्यायतेर्लिङ् बहुलं छन्दसि ॥ पा० २।४।७६ ॥ सम्प्रसारणं व्यत्ययेनात्मनेपदम् तेन ध्यायेम चिन्तयामः ॥ (प्रश्नः) ध्यानस्य किं प्रयोजनम्? ॥ (उत्तरम्) योगार्थं पापनाशार्थं वा ॥ तत्र प्रमाणम् ॥ यम(१)नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि "षट्" ॥

---

(१) यमनियमाद्यष्टाङ्गयोगस्य लक्षणमाह ॥ तत्र योगी द्विधा भवति ज्ञानयोगः कर्म्मयोगश्च । तत्र प्रमाणम् । शिखाज्ञानमयीवृत्तिर्यमाद्यष्टाङ्गसाधनैः । ज्ञानयोगः कर्म्मयोग इति योगी द्विधा मतः ॥ क्रियायोगमथेदानीं शृणु ब्राह्मणसत्तम ! ॥ अव्याकुलस्य चित्तस्य बन्धनं विषये क्वचित् ॥ यत्संयोगो द्विजश्रेष्ठ! स च द्वैविध्यमश्नुते ॥ कर्म्म कर्त्तव्यमित्येव विहितेष्वेव कर्म्मसु ॥ बन्धनं मनसो नित्यं कर्म्मयोगः स उच्यते ॥ यत्तु चित्तस्य सततमर्थे श्रेयसि बन्धनम् ॥ ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरश्शिवः ॥ इति त्रिशिखीब्राह्मणोपनिषदि ॥ २३+२७ ॥ अथ क्रियायोगस्य लक्षणमाह ॥ तत्र याज्ञवल्क्यसंहितायामुत्तरखण्डे । यमश्च नियमश्चैव आसनञ्च तथैव च ॥ प्राणायामस्तथा गार्गि ! प्रत्याहारश्च धारणा ॥ ध्यानं समाधिरेतानि योगाङ्गानि वरानने ! ॥ यमश्च नियमश्चैव दशधा सुप्रकीर्त्तितः ॥ आसनान्युत्तमान्यष्टौ त्रयं तेषूत्तमोत्तमम् ॥ प्राणायामस्त्रिधा प्रोक्तः प्रत्याहारश्च पञ्चधा ॥ धारणा पञ्चधा प्रोक्ता ध्यानं षोढा प्रकीर्त्तितम् ॥ त्रयस्तेषूत्तमाः प्रोक्ताः समाधेस्त्वेकरूपता ॥ बहुधा केचि·

इति पातञ्जलयोगसूत्रे ॥ पा० २ । सू० २९ ॥ १ ॥ पुनर्दक्षसंहितायाम् ॥ प्राणायामस्तथा ध्यानं प्रत्याहारस्तु धारणा ॥ तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ अ० ७।२ ॥ २ ॥ पुनर्निरुत्तरतन्त्रे । आसनं प्राणसंरोधः प्रत्याहारश्च धारणम् ॥ ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ पट० ३ ॥ ३ ॥ (प्रश्नः) यो-

---

दिच्छन्ति विस्तरेण पृथक् शृणु ॥ अथ यमस्य लक्षणमाह ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् ॥ क्षमा धृतिर्मिताहारः शौचन्त्वेते यमा दश ॥ अध्या० १।४५+४९ ॥ पुनस्तत्रैव नियमस्य लक्षणमाह ॥ तपः सन्तोषमास्तिक्यं दानमीश्वर(१)पूजनम् ॥ सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो व्रतम् ॥ अध्या० २।१॥ पुनस्तत्रैवासनस्य लक्षणमाह ॥ आसनान्यधुना वक्ष्ये शृणु गार्गि ! वरानने ! ॥ स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ॥ भद्रं मुक्तासनं चैव मयूरासनमेव च ॥ अध्या० ३।१+२ ॥ प्राणायामः भाष्ये निदर्शितः ॥ पुनस्तत्रैव प्रत्याहारस्य लक्षणमाह ॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ अध्या० ७।२ ॥ पुनस्तत्रैव धारणाया लक्षणमाह ॥ यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि ॥ धारणेत्युच्यते सद्भिः शास्त्रतात्पर्यवेदिभिः ॥ अध्या० ८।२॥ ध्यानस्य लक्षणम् भाष्ये निदर्शितम्॥ अथ समाधेर्लक्षणमाह ॥ तत्र समाधिर्द्विधा भवति सम्प्रज्ञात-सम्प्रज्ञातश्च । वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥१॥ विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः [असम्प्रज्ञातः] योग सू० पा० १ । सू० १७+१८ ॥ सम्प्रज्ञातावस्थायामात्मनः स्वाकारस्वरूपेण भावनं क्रियते । तत्र प्रमाणम् । वितर्कः चित्तस्यालम्बने स्थूल आभोग इति व्यासभाष्ये ॥ पुनर्धर्मशास्त्रान्तर्गतदक्षसंहितायाम् ॥ त्यक्त्वा विषयभोगांश्च मनो निश्चलतां गतम् ॥ आत्मशक्तिस्वरूपेण [यत् ध्यानं तत्] समाधिः परिकीर्त्तितः ॥ अध्या०७।२१॥ पुनः फेत्कारिणीतन्त्रे महानिर्वाणे च ॥ निर्लेपं निर्मलं शुद्धं आत्मानं तारिणीमयम् ॥ अन्तरीक्षे ततो ध्यायेदाकाराद्रक्तपङ्कजम् ॥ पट० ११ ॥ असम्प्रज्ञातावस्थायां वेदान्तसिद्धान्तानुसारेणाद्वैतभावनं क्रियते । तत्र प्रमाणम् । समाधिमधुना वक्ष्ये भवपाशविनाशनम् ॥ भवपाशनिबद्धस्य यथावच्छ्रोतुमर्हसि ॥ समाधिः समतावस्था जीवात्मपरमात्मनोः ॥ ब्रह्मण्येव स्थितिर्यासा समाधिः प्रत्यगात्मनः ॥ इति याज्ञवल्क्यसंहितायामुत्तरखण्डे अध्या० १०।१+२ ॥ पुनः सर्वदर्शनसंग्रहान्तर्गतपातञ्जलदर्शने॥ समाधिर्नाम भावना, सा च भाव्यस्य विषयान्तरपरिहारेण पुनः पुनर्निवेशनम् । भाव्यञ्च द्विविधम्, ईश्वरस्तत्त्वानि च । तान्यपि द्विविधानि जडाजडभेदात् । जडानि प्रकृतिमहदहङ्कारादीनि चतुर्विंशतिः । अजडः पुरुषः ॥२७॥

गस्य किं प्रयोजनम्? ॥ (उत्तरम्) मोक्षः वा तद्द्वारा कार्य्याणां सिद्धिरेव ॥ तत्र प्रमाणम् ॥ योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्ति-रविवेकख्यातेः ॥ योग० सू० पा० २। सू० २८ ॥ १ ॥ पुनर्योग-शिखोपनिषदि ॥ योगेन रहितं ज्ञानं न मोक्षाय भवेद्विधे ॥ ज्ञानेनैव विना योगो न सिद्ध्यति कदाचन ॥ जन्मान्तरैः स बहु-भिर्योगो ज्ञानेन लभ्यते ॥ ज्ञानन्तु जन्मनैकेन योगादेव प्रजायते ॥ अध्या० १। ५२+५३ ॥२॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ प्राप्तो य-ज्ञोपवीतो यः श्रीधरो ब्राह्मणोत्तमः ॥ योगाभ्यासं सदा कुर्य्यात् सभावो [उपासनया युक्तः] योगिवल्लभः ॥ पट० २२।२०। पुनस्त-त्रैव ॥ ब्राह्मणक्षत्रियादीनामादौ योगादिसाधनम् ॥ पट० २२। २९ ॥ पुनस्तत्रैव ॥ योगाधीनं परब्रह्म योगाधीनं परं तपः ॥ यो-गाधीनं सर्वसिद्धिस्तस्माद् योगं समाचरेत् ॥ योगेन ज्ञानमाप्नोति ज्ञानान्मोक्षमवाप्नुयात् ॥ पट० ४६।२३। पुनस्तत्रैव ॥ ध्यानेन लभते मोक्षं मोक्षेन लभते सुखम् ॥ सुखेनानन्दवृद्धिः स्यादानन्दो ब्रह्मविग्रहः ॥ पट० २४।१३९ ॥ ३ ॥ पुनर्ध्यानबिन्दूपनिषदि ॥ यदि शैलसमं पापं विस्तीर्णं बहुयोजनम् ॥ भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ॥ १ ॥ ४ ॥ पुनश्छान्दोग्योपनिषदि ॥ ध्यान-मुपास्स्वेति ॥ ७।६।१ ॥ ५ ॥ पुनर्गन्धर्वतन्त्रे। ध्यानयोगाद्भवेत्सिद्धि-र्नान्यथा खलु पार्वति! ॥ ध्यानयोगादहं सिद्धो विष्णुश्चापि पितामहः ॥ सर्वतन्त्रेषु यद्गुह्यं सर्वसिद्धिप्रदायकम् ॥ विना येन न सिद्ध्यन्ति वर्षकोटिशतैरपि ॥ पट० ११ ॥ ५ ॥ पुनः पञ्चद-श्याम् ॥ बहुव्याकुलचित्तानां विचारतत्त्वधी न हि ॥ योगो मु-ख्यस्तपस्तेषां धीदर्पस्तेन नश्यति ॥ परि० ९।१३२ ॥ ६ ॥ पुनर्यो-गशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् ॥ ध्यानमेव हि जन्तूनां

कारणं बन्धमोक्षयोः ॥ उत्तरार्द्धम् । अध्या० ९।२ ॥७॥ पुनः सांख्यप्रवचनभाष्ये ॥ चिन्तावृत्तिर्हि ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा तदाश्रयतया च चित्तपरनाम्नी बुद्धिरेव श्रेष्ठेति ॥ अध्या० । २ सू० ४२ । पुनस्तत्रैव सांख्यसूत्रे ॥ ध्यानधारणाभ्यां सवैराग्यादि तन्निरोधः ॥ अध्या० ६ । सू० २९ ॥८॥ पुनर्योगसूत्रे । ध्यानेन हेयावृत्तयः ॥ पा० २ । सू० ११ । तत्रैव भाष्यम् । क्लेशानां यावद्वृत्तयः स्थूलास्ताः क्रियायोगेन तनूकृताः सत्यसम्प्रख्याने ध्यानेन हातव्याः यावत्सूक्ष्मीकृता यावद्दग्धबीजकल्पेति व्यासभाष्ये ॥ तेन चित्तस्य वृत्तिनिरोधार्थं वा मोक्षप्राप्त्यर्थं ध्यानमेव कर्त्तव्यम् ॥ (प्रश्नः) तत्र किं ध्यानम् ? ॥ (उत्तरम्) रागोपहितध्यानम् ॥ सांख्यसूत्रे । अध्या० ३ । सू० ३० । तत्र भाष्यम् । ध्यानशब्देन धारणाध्यानसमाधयो योगोक्तास्त्रय एव ग्राह्या इति सांख्यप्रवचनभाष्ये ॥ पुनस्तत्रैव ॥ धारणासनस्वकर्म्मणा तत्सिद्धिः ॥ अध्या० ३ । सू० ३२ । तत्र भाष्यम् । प्राणस्य पूरकरेचककुम्भकैर्यो निरोधो वशीकरणं सा धारणेत्यर्थं इति सांख्यप्रवचनभाष्ये ॥ १ ॥ पुनर्योगसूत्रे । देशबन्धश्चित्तस्य धारणा ॥ तत्र प्रत्यैकतानताध्यानम् ॥ पाद० ३ सू० १+२ ॥ तत्र भाष्यम् । नाभिचक्रहृदयपुण्डरीके मूर्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु बाह्ये वा विषये वृत्तिमात्रेण बन्ध(१) इति धारणा । तस्मिन् देशे ध्येयावलम्बनस्य [ साकारस्वरूपस्य ] प्रत्यैकतानता सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानमिति व्यासभाष्ये ॥ २ ॥ (प्रश्नः) कतिविधानि ध्यानानि भवन्ति ? ॥ (उत्तरम्) द्विविधानि,

(१) बन्धमिति—बन्धशब्देन मूलबालम्बरादिबन्धेत्यर्थः ।

सगुणो निर्गुणश्चेति ॥ तत्र प्रमाणम् ॥ अथ ध्यानम् तद्द्विविधं सगुणं निर्गुणञ्चेति । सगुणं मूर्त्तिध्यानम् ॥ निर्गुणमात्मयाथात्म्यम् ॥ इति शाण्डिल्योपनिषदि ॥ अध्या० ५।१२ ॥ १ ॥ पुनर्योगशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् ॥ ध्यानमात्म [गायत्र्याः] स्वरूपस्य वेदनं मनसा खलु ॥ सगुणं निर्गुणं तच्च सगुणं बहुशः स्मृतम् ॥ उत्तरार्द्धं० अध्या० ९।१+२ ॥२॥ पुनः कुलार्णवतन्त्रे । ध्यानन्तु द्विविधं प्रोक्तं स्थूलसूक्ष्मप्रभेदतः ॥ साकारं स्थूलमित्याहुः निराकारन्तु सूक्ष्मकम् ॥ स्थिरात्मा मनसा कश्चित् स्थूलध्यानं प्रचक्ष्यते ॥ स्थूलेन निश्चितं चेतो भवेत् सूक्ष्मेऽपि सुस्थितः ॥ पट० ९ ॥ ३ ॥ पुनर्म्महानिर्वाणतन्त्रे । ध्यानन्तु द्विविधं प्रोक्तं सरूपारूपभेदतः ॥ अरूपं तत्र यद्ध्यानमवाङ्मनसगोचरम् ॥ ५।१३७ ॥ ४ ॥ (प्रश्नः) आअष्टवर्षादुपनीतानामद्विजातीनां बालकानां, वा ब्रह्मज्ञानरहितानामज्ञानिनां गृहस्थानां गायत्र्याः केन प्रकारेण ध्यानं कर्त्तव्यम् ? ॥ ( उत्तरम् ) साकाररूपेण ॥ तत्र प्रमाणम् ॥ वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥ योग० सू० पा० १ । सू० १७ । तत्र भाष्यम् । वितर्कः चित्तस्यालम्बने स्थूल आभोगः सूक्ष्मो विचारः आनन्दो ह्लादः । एकात्मिका सम्विदास्मिता । तत्र प्रथमः चतुष्टयानुगतः समाधिः स वितर्कः । द्वितीयो वितर्कविकलः सविचारः । तृतीयो विचारविकलः सानन्दः । चतुर्थस्तद्विकलः अस्मितामात्रेति सर्वे एते सालम्बनाः [ साकारस्वरूपेणोपासनया प्राप्तयोग्याः ] समाधय इति व्यासभाष्ये ॥ १ ॥ पुनः पञ्चदश्याम् ॥ मूर्त्तिप्रत्ययसान्तत्यमन्यानन्तरितं धियः ॥ ध्यानं तत्रातिनिर्विन्धो मनसश्चञ्चलात्मनः ॥ परि० ७। ११८ ॥२॥ तेन साकाररूपेण गायत्र्या ध्यानं कर्त्तव्यमिति

सिद्धम् ॥ (प्रश्नः) तस्याः किं साकारस्वरूपम् ? ॥ (उत्तरम्) शक्तिर्वा
प्रकृतिरेव गायत्र्याः साकारस्वरूपम् ॥ तत्र प्रमाणम् ॥ गायत्री
द्विविधा निष्कलासकलाद्याः, यद्यपि निष्कलाभिधातमानाख्येयं
तथा सत्ताख्यित्यर्थैनिर्णयोऽत्र क्रियते। यथा-अस्पन्दमनभिव्यक्तं
नाकिञ्चिद्वा सर्वातीतं सर्वागमे यथैव, सकला यथा एतस्याकस्मा-
च्चिदादौ कालः सम्भूत अचेष्टाचेष्टामयत्वादित्यस्पन्द इत्यर्थः, तत्
एव सुविमर्शः सा च मूला प्रकृतिः सेव सर्वकारणगुणस्वरूपा
ततो विकारात्मकाहम् इति परामर्शरूपः, इदं तत्स्पन्दारूढ़ाऽहङ्-
ङ्कारः, स च त्रिविधः सात्त्विको राजसस्तामसश्च, सात्त्विकादह-
ङ्कारान्निश्चयात्मिका बुद्धिः, राजसात्मन इन्द्रियादिकं तन्मात्राणि
च। तामसान्यच्च महाभूतानि भूतेभ्यो विराडात्माचेतनमूलत्वात्
सकलनिष्कलादिगायत्री एव। पुनरेवंविधे यो भगवान् चि-
दात्मा (१) सा एव गायत्री त्रिलिङ्गवाचकं नात्मैव, न वस्तुतः
अभेदत्वात् ॥ इति विष्णुधर्मोत्तरे गायत्रीनिर्णये ॥ १ ॥ पुनश्चर-
कसंहितायाम्। द्विविधमेव सर्वं सत्त्वासच्च तस्य चतुर्विधा परीक्षा ॥
सूत्रस्थाने। अध्या० ११ ॥ तत्र भाष्यम् ॥ द्विविधमित्यादि। सर्व-
मिति प्राङ्महानिर्वाणप्रलयादृयदासीच्छक्तिरेव परब्रह्म, तदग्रे
तदन्नं निखिलं द्विविधमेव प्रतीयमानं भवति। कथमिति त-

(१) चिदात्मा गायत्रीति स्पष्टीक्रियते। त्यक्त्वा विषयभोगांश्च मनो निश्चलतां गतम् ॥
आत्मशक्तिस्वरूपेण [ यद्ध्यानं तत् ] समाधिः परिकीर्तितः ॥ इति दक्षसंहितायाम्।
अध्या० ७।२१ ॥ योगशास्त्रान्तर्गतशिवसंहितायाम् ॥ आत्मा वारे च श्रोतव्यो मन्तव्य इति च
श्रुतिः ॥ सा सेव्या तत् प्रयत्नेन मुक्तिदा हेतुदायिनीति ॥ पट० १।३२॥२॥ पुनः ॥ आत्मा
अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति बृहदारण्योपनिषदि। अध्या० ६।५।६॥
अत्र द्रष्टव्यशब्देन गायत्र्यात्मनः स्वरूपेण बोधव्या ॥

दाह। सच्चासच्चेति। अस्तीति सद्वस्तुपरोक्ष्यमपरोक्ष्यञ्च। तत्रा-परोक्ष्यमलौकिकं वस्तुशक्तिब्रह्म सदैवतः, ततो लोहितमिव तेजः शुक्ल इवापः कृष्णमिवान्नं, तल्लोहितशुक्लकृष्णवदाभासतेजोन्नोपाहिता सा शक्तिः परमसूक्ष्माध्वन्यवरुद्धा लोहितशुक्लकृष्णवदाभासा गायत्री भगवती दुर्गा, सा पुनर्विद्या शान्तिः प्रतिष्ठा-निवृत्तिरिति तिस्रः, शुक्लः यो भूतत्वैकीभूय परव्योमरूपः परमात्मा शिवो बभूव। तस्य ज्योतीरूपं सा गायत्री तेजोवन्नाशनं तस्यैव ज्ञानशक्त्यध्यवसितं यदिच्छाशक्त्या परिणामन्ती विद्याविद्या भूत्वा विद्याश्रयं सदाशिवमविद्याश्रयाश्चतुरो वेदान् सूते। ते नियति नाम, तच्छक्त्या चेत्तदन्नं सर्वमपरोक्ष्यं प्रमाणगस्यत्वात्॥ इति श्रीपण्डितगङ्गाधरकविरत्नविरचिते चरककल्पतरौ भाष्ये॥ २॥ पुनर्ब्रह्मनीलतन्त्रे। शक्तिर्विना महेशानि! नास्ति किञ्चिन्मम प्रिये!॥ शक्तिर्हि ब्रह्मणो रूपं शक्तिरूपं वरानने!॥ पट० ८॥३॥ पुनर्भरद्वाजस्मृतौ॥ या गायत्री त्रिचरणा सा त्रिमूर्त्तिस्वरूपिणी॥ उपास्यानन्तरं विप्रैस्त्रिसन्ध्यासु त्रिमूर्त्तिषु॥४॥ पुनः पातञ्जलयोगसूत्रे। प्रकाशक्रियास्थितिशीलम्भूतेन्द्रियात्मकम्भोगापवर्गार्थं दृश्यम्॥ पात० यो० सू० पा० २ सू० १८॥ तत्र भाष्यम्॥ प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, स्थितिशीलं तमः इति एते गुणाः परस्परोपरक्तप्रविभागाः परिणामिनः संयोगविभागधर्म्माण इतरेतरोपाश्रयेणोपार्ज्जितमूर्त्तयः परस्पराङ्गाङ्गित्वेऽप्यसम्भिन्नशक्तिप्रविभागास्तुल्यजातीया:, तुल्यजातीयशक्तिभेदानुपातिनः प्रधानवेलायां [प्रातस्सायं वा मध्याह्नकाले च] समुपदर्शितसन्निधानागुणत्वेऽपि च व्यापारमात्रेण प्रधानान्तर्नीतानुमितास्तित्वात्पुरुषार्थकर्त्तव्यतया प्रयुक्तसामर्थ्यास्मा निधिमात्रो-

पकारिणोऽयस्कान्तमणिकल्पाः प्रत्ययमन्तरेणैकतमस्य वृत्तिमनुवर्त्तमानाः प्रधानशब्दवाच्याः भवन्ति, एतत् दृश्यमित्युच्यते, तदेतद्भूतेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूले न परिणामत इति तच्च नाप्रयोजनमपि तु प्रयोजनमुरीकृत्य प्रवर्त्तत इति भोगापवर्गार्थं हि तद्दृश्यं पुरुषस्येति, तत्रेष्टा नष्टगुणस्वरूपावधारणमपि भोगावन्भोगो भुक्तः स्वरूपावधारणमपवर्गं इति द्वयोरतिरिक्तमन्यदर्शनन्नास्तीति व्यासभाष्ये ॥ ५ ॥ कस्माद्गायत्रीप्रकृतिरित्युच्यते ॥ प्रकृष्टवाचकः प्रश्च कुण्डली विन्दुरूपिणी ॥ सृष्टिस्तत्र कर्त्रीनाम विद्या संकेतकुण्डली ॥ सृष्टौ प्रकृष्टौ सा विद्या प्रकृतिस्तेन कीर्त्तिता ॥ इति गायत्रीतन्त्रे तृतीयब्राह्मणपटले ॥ १ ॥ (प्रश्नः) का प्रकृतिः ? ॥ (उत्तरम्) सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः ॥ सांख्यसूत्रे । अध्या० १ । सू० ६१ ॥ १ ॥ पुनः कापिलसूत्रे । कथयामि अष्टौ प्रकृतयः । सू० २ ॥ तत्र भाष्यम् । अष्टौ प्रकृतीः कथयामीति तात्पर्य्यम् । प्रकृतेः कोऽर्थः कतमा प्रकृतिः कतिविधा सा इति संशयं परिजिहीर्षन् वदति, प्रकरोतीति प्रकृतिः जगत्प्रसवित्रीत्यर्थः । सा प्रकृतिर्द्विविधा, विशुद्धा [गायत्रीस्वरूपा] विमिश्रा च । गुणानां सत्त्वरजस्तमसां साम्यावस्थया जगतः कारणभूतमव्यक्तं प्रधानं शुद्धा । पुनरेषां वै साम्यावस्थया महातत्त्वाहङ्कारपञ्चतन्मात्राणीति सप्त प्रकृतिविकृतिभूतानीति विमिश्रा, एका शुद्धा सप्त विमिश्राः ॥ इति माधवाचार्य्येणोक्तम् ॥ तेन प्रकृत्यैव गायत्र्याः साकारस्वरूपेति सिद्धम् ॥ प्रकृतिरेव साकारस्वरूपेण ध्यातव्येति स्पष्टीक्रियते ॥ ते ध्यानयोगानुगता अपश्यत् देवात्मशक्तिं [अजामेकामिति । अजां प्रकृतिंलोहितशुक्लकृष्णातेजोऽव्यक्तलक्षणां वह्वीः प्रजास्सृजमानामुत्पाद-

यन्तीं ध्यानयोगानुगतदृष्टां देवात्मशक्तिस्वरूपां समानाकारमिति शङ्करभाष्ये श्वेताश्व० उप० अ० ४।५। ] स्वगुणैर्निगूढाम्॥ श्वेताश्वतरोपनिषदि ॥ १ ॥ पुनर्योगशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम्॥ ललाटमध्ये हृदयाम्बुजे वा यः पश्यति ज्ञानमयीं (१) प्रभान्तु ॥ शक्तिं सदा दीपवदुज्ज्वलन्तीं पश्यन्ति ते ब्रह्म तदेकदृष्टा ॥ उत्तरार्द्धे ॥ अ० १२।२५॥२॥ तेन साकारस्वरूपेण प्रकृतिरेव ध्यातव्येति सिद्धम्॥ (प्रश्नः) साकारध्यानस्य कः प्रकारः॥ (उत्तरम्) सात्त्विकराजसतामसस्येति उपासको वा कालकर्म(२)भेदेन भेदाः भवन्ति ॥ तत्र प्रमाणम्॥ सात्त्विको मोक्षकामानां राजसं राज्यमिच्छताम्॥ तामसं शत्रुनाशार्थं सर्वव्याधिनिवारकम्॥ इति बृहन्नीलतन्त्रे। पट० ५॥१॥ नित्यं [नित्योपासनायाम्] सात्त्विकमेवात्र नैमित्तिकं तु राजसम्॥ तामसं काम्यमेवात्र कुर्य्यात् फलवितृष्णयेति कङ्कालमालिनीतन्त्रे ॥ पट० ॥ २ ॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ रजस्तमो नाश सत्त्वं संस्थाप्य यततो मनः॥ कामक्रोधादिकं त्यक्त्वा योगी भवति योगवित्॥ रजोगुणं नृपाणान्तु तमोगुणमतीव च ॥ अधिकं हि पशूनां [अज्ञानिनां] हि साधूनां (३) सत्त्वमेव च ॥ पट० २६।२+४॥ तेन ब्राह्मणानां मोक्ष-

---

(१) ज्ञानमयीमिति—प्रकृतिस्वरूपिणीम्। तत्र प्रमाणम्। सैव च प्रकृतिरेकरूपेण ज्ञानेनैवात्मानं दुःखान्मोचयतीत्यर्थः॥ इति सांख्यप्रवचनभाष्ये। अ० ३ सू० ७४॥—

(२) कर्म्मेति कर्मशब्देन शान्त्यादिषट्कर्म्मेति बोधव्यम्॥

(३) साधूनामिति—साधु त्रि० साध-उन्। उत्तमकुलजाते क्रोधरहितशान्तस्वभावे च। न क्रुद्धः पुरुषं ब्रूयादेतद्धि साधुलक्षणमिति शब्दस्तोममहानिधौ॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि। क्षमा वै साधुमायाति न ह्यसाधुं क्षमा सदा॥ क्षमायाश्चाक्षमायाश्च पार्थ! विद्धि प्रयोजनम्॥ अध्या० १०२।२८॥ पुनस्तत्रैव वनपर्वणि॥ क्रोधः सुदुर्जयः शत्रुर्लोभो

कामानां सात्त्वि(१)कैव शुक्ला शुक्लाम्बरेण युक्ता, क्षत्रियाणां राज्यकामानां राजसी रक्तवर्णा रक्ताम्बरेण युक्ता, वा वैश्यानां कृषिकामानां तामसी कृष्णवर्णा कृष्णाम्बरेण युक्तेति ज्ञातव्या ॥ (प्रश्नः) कीदृग् स्वरूपा गायत्री ध्यातव्या ? ॥ (उत्तरम्) स्त्रीस्वरूपेण ॥ तत्र प्रमाणम् ॥ एवंविधे यो भगवान् चिदात्मा स एव गायत्री त्रिलिङ्गवाचकं नामैव न वस्तुतः अभेदत्वात्। यथा शक्तिशक्तिमन्तौ प्रकृतिपुरुषौ धर्म्माधर्म्मिणौ क्रियाक्रियावन्तौ स्वभावस्वभाविनौ गुणागुणिनौ यथा गायत्री परमेश्वराविवात्स्यैव चेतनपुरुषस्य द्वे नामनी, ध्यानेन तु स्त्रीलिङ्गः, तत् इति नपुंसकलिङ्गः, पुरुष इति पुल्लिङ्गः, त्रिलिङ्गो वा चेतनपुरुषः शब्दब्रह्मस्वरूप इति विष्णुधर्म्मोत्तरे गायत्रीमन्त्रनिर्णये ॥ १ ॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि ॥ नैव स्त्री न पुमानेतन्नैव चेदं नपुंसकम्। अ० २४८।२२ ॥ शुकं प्रति व्यासवाक्यम् ॥ पुनर्गन्धर्वतन्त्रे। शक्तिर्माहेश्वरी ब्रह्म त्रयस्तुल्यार्थवाचकाः ॥ स्त्रीपुंनपुंसको भेदः शब्दतो न परार्थतः ॥ पट० ३४॥३॥ यद्वा। यथाभिमतध्यानाद्वा ॥ योगसूत्रे। पाद १। सू० ३८। तत्र भाष्यम्। यदेव मतं तदेव ध्यायेत् ॥ इति व्यासभाष्ये ॥ तेन बालकानाम् आ अष्टवर्षादुपनीतानां मातेव, वा ब्रह्मज्ञानरहितानां अज्ञानिनां गृहस्थानां मूर्खाणां स्त्रेव प्रिया भवति, तस्मात् स्त्रीस्वरूपेण गायत्र्याः ध्यानं कर्त्तव्यमित्यभिप्रायः ॥ (प्रश्नः) स्त्रीस्वरू-

---

व्याधिरनन्तकम् ॥ सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥ तेन क्षमावान् वा दयावान् पुरुषः साधुरित्यर्थः।

(१) सात्त्विकमिति—तत्र सात्त्विकादिध्यानभेदानां लक्षणमाह। आसीनं श्वेतरूपन्तु सात्त्विकं समुदाहृतम् ॥ यानमार्गे स्थितं पीतं राजसं परिकीर्त्तितम् ॥ दण्डमानस्थितं रौद्रं कृष्णं तामसमुच्यते इति फेत्कारिणीतन्त्रे पट० ४ ॥

पेण ध्यानस्य किं प्रयोजनम् ?॥ (उत्तरम्) योगादिसाधनेष्ववलम्बनमेव प्रयोजनम् ॥ तत्र प्रमाणम् ॥ युवती या समाख्याता सा महाकुण्डली(१)परा ॥ इति कामधेनुतन्त्रे । पट० ८ ॥ पुनस्तत्रैव ॥ योगमार्गे भक्तिमार्गे मुक्तिमार्गे च सुन्दरि ! ॥ ध्यानमार्गे तु पूजायाम् जपमार्गे तथैव च ॥ एतासु युवतीवर्णाः (२) कार्य्यकारणरूपिणीति ॥ पट० १२॥१॥ पुनर्बृहन्नीलतन्त्रे । स्त्रियः प्राणाः [ गायत्र्याः स्वरूपाः । तत्र प्रमाणम् । प्राणो गायत्रीति । श० ब्रा० १३।५।१५ ॥ ] स्त्रियो देवा स्त्री एव विभूषणम् ॥ स्त्रीसङ्गिनां सदा भाव्यम् [ उपासनाकर्त्तव्या ] नान्यथा स्वस्त्रियामपि ॥ पट० ५ ॥ २ ॥ पुनः कामधेनुतन्त्रे ॥ पञ्चाशन्मातृका या सा युवती परिगीयते ॥ युवतीरहितन्देवि ! कुतो विद्या कुतो मनः ॥ निर्गुणं परमं ब्रह्म प्रधाना युवतीगणाः ॥ पट० १० ॥ पुनस्तत्रैव ॥ प्रथमं कामिनीं ध्यात्वा जपपूजां सदाचरेत् ॥ कामिनीध्यानमात्रेण सर्वसिद्धिमयो भवेत् ॥ पट० १९॥३॥ पुनर्नीलतन्त्रे । योषिताम्ध्यानयोगेन सिद्धयः स्युर्न संशयः ॥ पट० १० ॥४॥ तेन योगादिसिद्धिसाधकत्वात् स्त्रीस्वरूपेण ध्यानम् कर्त्तव्यमिति सिद्धम् ॥ (प्रश्नः) ध्यानमन्त्रयोः कस्सम्बन्धः ?॥ (उत्तरम्) अङ्गाङ्गित्वभावरूपसम्बन्धः ॥ तत्र प्रमाणम् ॥ मन्त्रो लयो हठो राजयोगोऽन्तर्भूमिकाः क्रमात् ॥ एक एव चतुर्धाऽयं महायोगोऽभिधीयते ॥ इति योगशिखोपनिषदि । अध्या० १।१३१॥ १ ॥ पुनर्देवीभागवतान्तर्भगवतीगीतायाम् । न योगेन विना मन्त्रो न मन्त्रेण विना हि सः ॥ द्वयोर-

(१) कुण्डलीति—कुण्डली गायत्रीत्यर्थः ।

(२) युवतीवर्णा इति—योगादिमार्गेषु जपनीयमन्त्रस्य वर्णानामक्षराणां रूपं स्त्रियस्वरूपेण चिन्तनीयमित्यभिप्रायः ॥

भ्यासयोगाद्धि ब्रह्मसंसिद्धिकारणम् ॥ अध्या० ५।६१॥२॥ पुनर्देवी-पुराणे योगपरिशिष्टे नारदं प्रति सनत्कुमारवाक्यम्। गायत्र्या पुनर्योगसिद्धयर्थं जपं कुर्य्यात् समाहितः॥ अध्या० १० ॥ ३ ॥ पुन-र्गायत्रीतन्त्रे चतुर्थब्राह्मणपटले। मन्त्राणाञ्चिन्तनाद्देवि ! स मनुर्दे-वता स्वयम्॥ ध्यानेन दर्शनन्दत्त्वा पुनर्मन्त्रेषु लीयते ॥ एवं पुनः पुनर्मन्त्रं देवता च पुनः पुनः॥ आविर्भावतिरोभावौ जायते स मनुः स्वयम्॥ ध्यानस्यान्तर्गतं मन्त्रं ध्यानकाले विशेषतः॥ मन-स्यान्तर्गतं मन्त्रं जपकाले तथैव च ॥ मनसा चिन्तनं ध्यानं तेन ध्यानं प्रकीर्त्तितम्॥४॥ पुनः कामधेनुतन्त्रे ॥ देवध्यानं ततः कृत्वा इष्टमन्त्रं [गायत्रीमन्त्रं] ततो जपेत्॥ पुनर्ध्यानं देवतायाः [गा-यत्र्याः] पुनर्ज्जापं कुरु प्रिये ! ॥ पट० ११ ॥ ५ ॥ तेन ध्यानकाले ध्यानमन्त्रयोरङ्गाङ्गित्वभावरूपसम्बन्ध इति सिद्धम्॥ [कथम्भूतम् स्वरूपम्] (भूर्भुवः स्वः) ब्राह्मणक्षत्रियवैश्यादिभिः॥ तत्र प्रमा-णम्॥ भूर्भुवः स्वः शब्देन ब्रह्मक्षत्रविशो वेति कात्यायन-सूत्रे ॥४।८।१७॥ तेन भूर्भुवः स्वःशब्देन ब्राह्मणक्षत्रियवैश्या इति गृह्यन्ते॥ (वरेण्यम्) वरेण्य त्रि० वृङ् एन्य इति "उणादिकोषे पा० ३।९८" तेन वरणीयमुपासनीयं वा (यः) य इत्यालिङ्गधर्म्मं यत्॥ तत्र प्रमाणम्॥ तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः॥ उदाहृते तु यच्छब्दो तच्छब्दः स्यादुदाहृत इति योगियाज्ञवल्क्य-वाक्यम्। तेन यद्भर्गाख्यं गायत्र्याः स्वरूपम् (नः) अस्माकं ब्रा-ह्मणक्षत्रियवैश्यानाम् (धियः) ध-धीः प्रज्ञा, इ-मनः, य-प्राणः, स-मानससूर्य्यः, तेषां समूहे धियस् नपुंसको द्वितीयान्तः धियः। यद्वा धी बुद्धौः॥ तत्र प्रमाणम्॥ धीः प्रज्ञा नाम सुपठितम्। नि-घण्ट॥ अध्या० ३ खं०९ ॥ यद्वा, धीः कर्म्म ॥ तत्र प्रमाणम्॥ धीः

कर्म्म नाम सुपठितम् ॥ निघ० अध्या० २ । खं० १ ॥ १ ॥ धी: कर्मेति निरु० । दै० । ६।२०॥२॥ कर्माणि धिय: । इति गोपथब्राह्मणे । पू० १ । २२ ॥ ३ ॥ यद्वा, धिय: प्राणान् ॥ तत्र प्रमाणम् ॥ प्राणा वै धिय इति श्रुति: ॥ अत्र धिय: शब्देन बुद्धी: कर्म्म प्राणो वा इति सिद्धम् ॥ तेन बुद्धी: कर्म्म प्राणान् वा (प्रचोदयात्) "चुद प्रेरणे" प्रकर्षेण प्रेरयति (२) प्रेरयेत् वा, यद्वा, आत्मज्ञानमुपदिशति ॥ तत्र प्रमाणम् ॥ चोदना चोपदेशश्च विधिश्चैकार्थवाचिनोति भाट्ट: ॥ पुन: ॥ चोदयित्री सूनृतानां चेतन्ती सुमतीनां यज्ञं दधे सरस्वती ॥ यजु० अध्या० २० मं० ८५ ॥ १ ॥ ऋग्वेदे । भारतीळे सरस्वति याव: सर्वा उपब्रुवे । तानश्चोदतश्रिये । २ । ५ । १ । १२४ । १८९ । ८ ॥ २ ॥ पुन: सर्वभूतिप्रदो नारायणोपनिषदि ॥ स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता ॥ आयु: पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा प्रजातुं ब्रह्मलोकम् । ३६ ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीज्योति:स्वरूपोपासनावर्णनं प्रथमप्रकरणम् ।

---

अथ द्वितीयार्थमाह ।

अन्वय: ॥ तद्देवस्य वरेण्यम् भर्गो धीमहि भूर्भुव: स्व: सवितुर्यो नो धिय: प्रचोदयात् ॥ २ ॥

पदार्थ: ॥ (तत्) (देवस्य) द्योतनात्मकपदार्थस्य "माण्डलान्तर्गतं" (वरेण्यम्) श्रेष्ठमुपासनीयम् (भर्ग:) भर्गाख्यम् तेजो गायत्र्या: स्वरूपम् (ओम्) ब्रह्म (धी-

मह्हि) ध्यायामः [ कथम्भूतस्य देवस्य ? ] (भूर्भुवः स्वः)
अग्निवाय्वादित्यादिसंज्ञकस्य [ पुनः कथम्भूतस्य दे-
वस्य ? ] (सवितुः) प्रेरकस्य ( यः ) यो देवो द्योतना-
त्मकपदार्थः (नः) अस्माकम् ( धियः ) बुद्धीः (प्रचोद-
यात् ) "धर्म्मादिलौकिकपारलौकिककार्य्येषु" प्रेय-
रति ॥ २ ॥

भाष्यम् ॥ वयम् ब्राह्मणक्षत्रियवैश्यादयः ( तत् ) तदित्य-
व्ययम् । (देवस्य) द्योतनात्मकपदार्थस्य "मण्डलान्तर्गतं" ( वरे-
ण्यम्) श्रेष्ठमुपासनीयम् ( भर्गः ) भर्गाख्यम् तेजो गायत्र्याः स्वरू-
पम् (ओम्) ब्रह्म ( धीमहि ) ध्यायामः [ कथम्भूतस्य देवस्य ? ]
(भूर्भुवः स्वः) अग्निवाय्वादित्यादिसंज्ञकस्य (१) ॥ तत्र प्रमाणम् ॥
भूरित्यग्निः, भुव इति वायुः,(२) स्व इत्यादित्यः ॥ इति तैत्तिरीयो-
पनिषदि ॥ ५ । २ ॥ चत्वारो वा इमे देवा अग्निर्वायुरादित्यश्च-
न्द्रमाः ॥ गो० ब्रा० पू० २।१६ ॥ तेन भूर्भुवः स्वः शब्देभ्योऽग्नि-
वाय्वादित्यादयः सिद्धाः ॥ [ पुनः कथम्भूतस्य देवस्य ? ] (सवितुः)
प्रेरकस्य ( यः ) यो देवो "द्योतनात्मकपदार्थः स्वप्रकाशेन" (नः)
अस्माकम् (धियः) बुद्धीः ( प्रचोदयात् ) धर्म्मादिलौकिकपारलौ-
किककार्य्येषु प्रेरयति ॥ २ ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो द्योतनात्मकपदार्थान्तर्गतगायत्र्युपासना
वर्णनं द्वितीय प्रकरणम् ॥ २ ॥

---

(१) यद्वा, (भूः) अग्नेः (भुवः) वायोः (स्वः) आदित्यस्य (तद्वरेण्यम्) तच्छ्रेष्ठम् ( भर्गः )
भर्गाख्यम् तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम ॥

(२) सुवरित्यादित्य इति ग्रन्थान्तरे ॥

अथ तृतीयार्थमाह ।

अन्वयः ॥ सवितुर्देवस्य तद्भर्गः ओम् धीमहि भूर्भुवः स्वर्वरेण्यम् यो नो धियः प्रचोदयात् ॥ ३ ॥

पदार्थः ॥ (सवितुः) सूर्य्यादि"मण्डलान्तर्गत" [कथम्भूतस्य सवितुः] (देवस्य) प्रकाशमानस्य (तद्भर्गः) तत्तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम [केन प्रकारेण ?] (भूर्भुवः स्वः) ऋग्यजुःसामेति गायत्र्याः स्वरूपेण [कथम्भूतं स्वरूपम्] (वरेण्यम्) उपासनीयम् (यः) यद् गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा॥३॥

भाष्यम् ॥ (सवितुः) सूर्य्यादि"मण्डलान्तर्गत" [कथम्भूतस्य सवितुः] (देवस्य) प्रकाशमानस्य (तद्भर्गः) तत्तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम [केन प्रकारेण ?] (भूर्भुवः स्वः) ऋग्यजुःसामेति गायत्र्याः स्वरूपेण ॥ तत्र प्रमाणम् ॥ भूरिति ऋचः भुव इति सामानि सुव इति यजूꣳषि ॥ इति तैत्ति० उप० अनु० ५।२ ॥ १ ॥ पुनश्छान्दोग्योपनिषदि । य एषोऽन्तरिक्षिणि पुरुषो (१) दृश्यते सैवार्क तत्साम तदु वयं तद्यजुस्तद्ब्र-

(१) पुरुष इति—गायत्री वै पुरुषः ॥ इति ऐतरेयब्राह्मणम् ॥ ४।१।२ ॥ इमे वै लोकाः पूरयमेव पुरुषोऽयं पवते सोऽस्यां पुरि शेते तस्मात् पुरुष इति ॥ शतपथब्राह्मणे ॥ १३।६।२।१ ॥ पुनश्छान्दोग्योपनिषदि गायत्र्युपाख्याने । तावानस्य महिमा ततो ज्यायाँश्च पुरुषः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ प्रपा० ३।१२।६ ॥ तत्र भाष्यम् ॥ तावानस्य गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमाविभूतिविस्तारः यावांश्चतुष्पात् षड्विधश्च ब्रह्मणो विकारः पादो गायत्रीति व्याख्यातः । अतस्तस्मादिकारलक्षणात् गायत्र्या-

ह्मेति ॥ ११।३७ ॥ तत्र भाष्यम्। भूरिति व्याहृतिमृग्भ्यो जग्राह। भुव इति व्याहृतिं यजुर्भ्यः, स्व इति सामभ्य इति शङ्करभाष्यम् ॥ २ ॥ पुनर्यजुर्वेदे ॥ ऋचो नामास्मि यजूंषि नामास्मि सामानि नामास्मि ॥ अध्या० १८।६७ ॥ ३ ॥ पुनर्यास्कोऽप्याह। महान्तमात्मानमेषमर्गाप्रवदन्तीन्द्रमित्रवरुणमग्निमाहुरिति ॥ निरु० परि० २।१ ॥ तेन भूःशब्देन ऋक् भुवःशब्देन यजुः स्वः शब्देन सामेति सिद्धम् ॥ यद्वा, ओंकारस्याकारोकारमकारमात्रकया गायत्री वेदस्वरूपेति ज्ञातव्या ॥ तत्र प्रमाणम् ॥ अकारश्चैव ऋग्वेद उकारो यजुरुच्यते ॥ मकारः सामवेदस्तु त्रिषु युक्तोऽप्यथर्वणः ॥ इति ज्ञानसङ्कलिनीतन्त्रे ॥ पट १०१॥१॥ पुनः प्राणाऽग्निहोत्रोपनिषदि ॥ ऋग्वेदो गार्हपत्यश्च पृथिवी ब्रह्म एव च ॥ अकारस्य शरीरन्तु व्याख्यातं ब्रह्मवादिभिः ॥ यजुर्वेदोऽन्तरिक्षञ्च दक्षिणाग्निस्तथैव च ॥ विष्णुश्च भगवान्! देव! उकारः परिकीर्त्तितः ॥ सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ॥ ईश्वरः परमो देवो मकारः परिकीर्त्तितः ॥ ५+७॥२॥ पुनः कपिलगीतायाम् ॥ ब्रह्मा त्रिकूटस्थानस्थः अकाराक्षरसंज्ञितः ॥ वाग्वैखरी ह्यवस्था तु जा-

---

स्याद्वाचारम्भणमात्र ततो ज्यायाम् महत्तरश्च परमार्थसत्यरूपोऽविकारः पुरुषः सर्वपूरणात् पुरीशयनाच्च। तस्याऽस्य पादः सर्वा सर्वाणि भूतानि तेजोऽबन्नादीनि स्थावरजङ्गमानि त्रिपात् त्रयः पादा (१) अस्य सोऽयं त्रिपात्। त्रिपादामृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मन्यवस्थितमित्यर्थः ॥ इति शङ्करभाष्यम् ॥ पुनः ॥ गायत्रीतन्त्रे। शेते निरञ्जनो देवः पञ्चाशन्मातृकापुरे ॥ अन्तर्यामी जगत्स्वामी पुरुषस्तेन कथ्यते ॥ पट० २ ॥ तेनः पुरुषः गायत्रीत्यर्थः ॥

---

(१) पादमिति—पद्यते ज्ञायते येन तत्पदम् चिह्नमोङ्काराख्य गायत्र्याः स्वरूपम्, तस्य स्वरूपस्य सूचको यत्तत्पादम्। तेनात्र पादशब्देनोङ्कारस्याकारोकारमकारमात्रात्रयमिति बोद्धव्यम् ॥ यद्वा, पादशब्दः स्थानवाचकत्वेन भूर्भुवः स्वर्लोकेषु व्यापकत्वमित्यर्थः ॥

स्मृतिः स्थूलदेहकम् ॥ ह्रस्वमात्रा हि ऋग्वेदो रजोगुणः प्रकीर्त्तितः ॥ एतत्तारकविज्ञेयं रक्तपङ्कजमध्यगम् ॥१॥ विष्णुना श्रीहटस्थान उकाराक्षरसंज्ञितम् ॥ दीर्घमात्रा मध्यमा च लिङ्गदेहस्तथैव च ॥ स्वप्नावस्था यजुर्वेदो गुणः सत्त्वं प्रकीर्त्तितः ॥ एतद्दण्डकविज्ञेयं श्वेतपङ्कजमध्यगम् ॥२॥ रुद्रस्थानन्तु गोल्हाटं मकाराक्षरसंज्ञितम् ॥ प्लुतमात्रा हि वज्राख्या तमोगुणः प्रकीर्त्तितः ॥ कारणं देहकं प्रोक्तं पश्यन्ती वाक् प्रतिष्ठिता ॥ सुषुप्त्यावस्थयायुक्तः सामवेदस्तथैव च ॥ एतत् कुण्डलविज्ञेयं श्वेतपङ्कजमध्यगम् ॥ अध्या० ३।८+१३॥३॥ पुनः शिवगीतायाम् ॥ चतस्रस्तस्य मात्रास्युरकारोकारकौ तथा ॥ मकारश्चैव सा नार्द्धमात्रेति परिकीर्त्तिता ॥ पूर्वं भूश्च ऋग्वेदो ब्रह्माष्टवसवस्तथा ॥ गार्हस्पत्यश्च गायत्री गङ्गाप्रातःसवस्तथा ॥ द्वितीया च भुवो विष्णु रुद्रोऽनुष्टुप्यजुस्तथा ॥ यमुना दक्षिणाग्निश्च माध्यन्दिनसुवस्तथा ॥ तृतीया च सुवः सामान्यादित्यश्च महेश्वरः ॥ अग्निराहवनीयश्च जगती च सरस्वती ॥ अध्या० १५।१६+१८ ॥ ४ ॥ अत्र भूर्भुवःस्वःशब्देन ऋग्यजुसामेति सिद्धम् ॥ अथ ऋग्यजुसामशब्देन गायत्र्युपासनीयेति स्पष्टीक्रियते ॥ गायत्री च स्वयं वेदः प्रणवत्रय-(१)संयुतः ॥ गायत्री यदि पुंस्कास्याद्वेदमाता तथापि सा ॥ इति गायत्रीतन्त्रे तृतीयब्राह्मणपटले ॥ १ ॥ पुनरुव्वटाचार्य्योऽप्याह। यां वै देवतामृगभ्यनुक्तां यां यजुः सैव देवता साकं सा देवता तद्यजुरिति उपासनार्थमृग्यजुषो पृथग्ग्रहणमतो ज्ञेयं ऋग्यजु-

---

(१) प्रणवत्रयसंयुतेति—प्रणव ओंकारस्तस्याकारोकारमकारमात्रात्रयैव वेदस्वरूपास्तैन संयुतः प्रणवत्रयसंयुतः। वेदस्वरूपा गायत्री ऋग्यजुःसामस्वरूपेण संयुतेत्यर्थः॥

षमिति ॥ यजुर्वेदभाष्यस्य भूमिकायाम् ॥ २ ॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ आदौ ब्रह्मणो ध्यानं पूरकाष्टाङ्ग[योगाख्याष्टाङ्ग]लक्षणैः ॥ कुर्यात् सकलसिद्ध्यर्थमम्बिकापूजनेन च ॥ ऋग्वेदं चेतसि ध्यात्वा मूलाधारे चतुर्दले ॥ वायुना चन्द्ररूपेण धारयेत् सुधीः ॥ पट० १७ । ८७+८८ ॥ पुनस्तत्रैव । कुम्भकं मारुतं कारयेन्मन्त्री यजुर्वेदः पुरःसरम् ॥ सर्वतत्त्वाधिष्ठितम् तत् सर्वविज्ञानमुत्तमम् ॥ पट० १७।९० ॥ ३ ॥ पुनर्गायत्रीतन्त्रे तृतीयब्राह्मणपटले । वेदध्यानं (१) वेदमन्त्रं (२) अज्ञात्वा शूद्रवद्द्विजः ॥ पुन-

---

(१) वेदध्यानमिति—अथ वेदस्वरूपा गायत्र्याः ध्यानं निर्दिश्यते ॥ विशेषं शृणु राजेन्द्र! वेदध्यानं सनातनम् ॥ वेदमन्त्रं महाराज ! परब्रह्ममयं सदा ॥ अथ सामवेदध्यानम् ॥ चतुर्भुजां चतुर्वक्त्रां शुद्धस्फटिकसन्निभाम् ॥ शुक्लपद्मासनासीनां पद्मगन्धमयीं सदा ॥ वराभयकरां नित्यां वीणापुस्तकधारिणीम् ॥ अमन्दमन्दरलीलाभां नयनत्रयराजिताम् ॥ सिन्दूरतिलकोद्दीप्तामञ्जनाञ्जितलोचनाम् ॥ कृष्णांशुकपरीधानां चलत्कुण्डलबलाम् ॥ हीरकद्युतिसङ्काशां दशदिक्ज्योतिरुज्ज्वलाम् ॥ हास्ययुक्तां प्रसन्नास्यां नवयौवनसंयुताम् ॥ शरत्पूर्णशशिमुखीं पीनोन्नतघनस्तनीम् ॥ शङ्खकङ्कणकेयूरनानाभरणशोभिनीम् ॥ नानालावण्यसंयुक्तां शुक्लवस्त्रोत्तरीयिणीम् ॥ पञ्चाशद्वर्णहाराढ्यां शान्तां सामसमाश्रयाम् ॥ १ ॥ अथ यजुर्वेदध्यानम् ॥ गौराङ्गीं दीर्घनयनां चतुर्वक्त्रां चतुर्भुजाम् ॥ रक्तपद्मासनासीनां रक्तांशुकपरिच्छदाम् ॥ वरदानरतां देवीं वीणापुस्तकधारिणीम् ॥ दिव्यगन्धमयीं नित्यां शङ्खकङ्कणमण्डिताम् ॥ मुक्ताहारलतोपेतां कदम्बकोरकस्तनीम् ॥ पूर्णचन्द्रमुखीं पूर्णां पीतवस्त्रोत्तरीयिणीम् ॥ सर्वशास्त्रमयीं विद्यां यजुर्वेदसमाश्रयाम् ॥ २ ॥ अथ ऋग्वेदध्यानम् ॥ रक्ताङ्गीं पीतवसनां रक्तपद्मासनस्थिताम् ॥ रत्नाभरणसंयुक्तां रक्तगन्धप्रलेपिताम् ॥ मन्थनीं रक्तनयनां कृष्णवस्त्रोत्तरीयिणीम् ॥ चतुर्भुजां सुचतुरां चतुर्वक्त्रां बृहत्कटीम् ॥ सिन्दूरतिलकोद्दीप्तां दीर्घकेशीञ्च सुस्तनीम् ॥ सर्वाङ्गसुभगां भव्यां सर्वसौभाग्यशालिनीम् ॥ इति गायत्रीतन्त्रे तृतीये ब्राह्मणपटले ॥

(२) वेदमन्त्रमिति—वेदस्वरूपा गायत्री तस्या उपासनायाः प्रतिपादको "तत्सवितुरिति" सावित्र्याख्यम् यो मन्त्रः स वेदमन्त्रं इति बोध्यव्यम् । कस्मात् ? । आषोडशाद्ब्राह्मणस्य सावित्री नाति वर्त्तते इति भावत्वात् ॥

स्तवैव। गायत्री च तथा सन्ध्या वेदध्यानं तथा मनुम्॥ कलिकाले महाराज! ब्राह्मणेषु प्रशस्यते॥४॥ (प्रश्नः) कस्मादृग्यजुःसामेत्युच्यते?॥ (उत्तरम्) ऋक्=ऋ—गतौ भु० पर० सक् अनिट्। सर्वेषां प्राणिनां भूतेषु हृदयेषु ऋच्छति गच्छति सा ऋक् गायत्रीति गृह्यते। यजु० यज=देवपूजने सर्वैः देवैः मनुष्यैर्वा पूजिता सा गायत्री यजुषो नाम्ना गृह्यते। साम० सान्त्वने अट० चु० उ० स० सेट्। स्वज्ञानेनैव, या भक्तानां शान्तयतीति सामशब्देन गृह्यते॥ पुनर्यास्कोऽप्याह। यजुर्यजतेः साम सम्मितमृचस्यते वर्चासमम्॥ निरु० दै० अ० १। खं० ११॥ तेन ऋग्यजुःसामशब्देन गायत्र्येवोपासनीयमिति गृह्यते॥ [कथम्भूतं स्वरूपम्] (वरेण्यम्) उपासनीयम्। (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये वेदत्रयरूपत्वे गायत्र्युपासनावर्णनं तृतीयप्रकरणम्।

---

### अथ चतुर्थार्थमाह॥

**अन्वयः॥** सवितुर्देवस्य तद्भूर्भुवःस्वर्वरेण्यम् भर्गो धीमहि ओम् यो नो धियः प्रचोदयात्॥ ४॥

पदार्थः॥ (सवितुः) चन्द्रस्य "मण्डलान्तर्गतं" [कथम्भूतस्य सवितुः?] (देवस्य) प्रकाशमानस्य (तद्भूर्भुवःस्वर्वरेण्यम्) तद्ब्राह्मणक्षत्रियवैश्यादिभिर्वरणीयमुपासनीयम् वा (भर्गः) भर्गाख्यम्पापभर्ज्जनहेतुभूतम् तेजो गायत्र्याः स्वरूपम् (धीमहि) ध्यायेम [केन प्रकारेण?] (ओम्) ओंकारस्याकारोकारमकारमात्रात्रयस्वरूपेण

(यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति ॥ ४ ॥

भाष्यम् ॥ (सवितुः) चन्द्रस्य "मण्डलान्तर्गतं" [कथम्भूतस्य सवितुः ?] (देवस्य) प्रकाशमानस्य (तद्भूर्भुवःस्ववरेण्यम्) तद्ब्राह्मणक्षत्रियवैश्यादिभिरुपासनीयम् (भर्गः) भर्गाख्यम्पापभञ्जनहेतुभूतम् तेजो गायत्र्याः स्वरूपम् । (धीमहि) ध्यायेम [केन प्रकारेण ?] (ओम्) ओंकारस्याकारोकारमकारमात्रास्वरूपेण ॥ तत्र प्रमाणम् ॥ परञ्चापरं ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति । स यद्येकमात्र [म] मभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानमनुभवतीति प्रश्नोपनिषदि । प्र० ५।३ । तत्र भाष्यम् । ऋचो ऋग्वेदरूपा ह्योंकारस्य प्रथमा एकमात्रा । तदभिध्यानेन न स मनुष्यजन्मनि द्विजाग्र्य इति शङ्करभाष्यम् ॥ पुनस्तत्रैव ॥ अथ यदि द्विमात्रेण [उ] मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते । स सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्त्तते । तत्र भाष्यम् ॥ अथ पुनर्यदि द्विमात्रा विभागज्ञो द्विमात्रेण विशिष्टमोंकार[गायत्रीं]मभिध्यायीत स्वप्नात्मकेन मनसि मननीये यजुर्मये सोमदैवत्ये सम्पद्यते, एकाग्रतयात्मभावं गच्छति स एवं सम्पन्नोऽमृतोऽन्तरिक्षमन्तरिक्षाधाराद् द्वितीयरूपं द्वितीयमात्ररूपैर्यजुर्भिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयन्ति तं यजुषीत्यर्थ-

---

(१) चन्द्रस्य मण्डलान्तर्गतेति—स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुषः [गायत्र्याः स्वरूपम्] एतमेवाहं ब्रह्मोपास्य इति ॥ बृहदा० उप० ४।१।३॥

इति शङ्करभाष्यम्॥ पुनस्तत्रैव॥ यः पुनरेतत्त्रिमात्रेणै[म]वोमित्येनैवाक्षरेण परं पुरुष[गायत्रीं]मभिध्यायीत स तेजसि सूर्य्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोके। तत्र भाष्यम्। यः पुनरेतमोंकारत्रिमात्रे [म] त्रिमात्रविषयविज्ञानविशिष्टेनोमित्येनैवाक्षरप्रतिकेन परं सूर्य्यान्तर्गतं पुरुषम[गायत्रीं]भिध्यायीत, तेनाभिध्यानेन प्रतीकत्वेन न त्वालम्बनत्वप्रकृतमोंकाररूपस्य परञ्चापरञ्च ब्रह्मेति भेदाभेदश्रुतेरोंकारमिति च द्वितीयानेकसः श्रुता बाध्यते। अन्यथा यद्यपि तृतीयाभिवानत्वेन करणत्वमुपपद्यते तथापि प्रकृतानुरोधात्त्रिमात्रं पुरुषमिति शङ्करभाष्यम्॥ १॥ पुनर्गोपथब्राह्मणे॥ या सा प्रथमा[अ]मात्रा ब्रह्मदेवत्या रक्तावर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्रह्मपदम्। या सा द्वितीयामात्रा [ उ ] विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। या सा तृतीयामात्रे[म]शानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानपदम्॥ पू० १।२५॥ २॥ पुनः शिवाथर्वशीर्षे। तदेतेनात्मन्नेतेनार्द्धचतुर्थेन मात्रेण शान्तिं संसृजति पशुपाशविमोचनम्। या सा प्रथमा[अ]मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्रह्मपदम्। या सा द्वितीयामात्रा [ उ ] विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। या सा तृतीया[म]मात्रा ईशानदेवत्या कपिलावर्णेन यस्तां ध्यायते नित्यं स गच्छेदीशानपदम्। या सार्द्धचतुर्थीमात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धास्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामयम्। तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रह-

समय: पन्थाविहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषय: परं परायणञ्चेति ॥ ३ ॥ पुनः शाण्डिल्योपनिषदि । इड़या बाह्याद्वायुमापूर्य्य षोड़शमात्राभिरकारं चिन्तयन् पूरितं वायुं चतु:षष्टिमात्राभि: कुम्भ इत्युकारं ध्यायन् पूरितं पिङ्गलयाद्वात्रिंशन्मात्रया मकारमूर्त्तिध्यानेनेव क्रमेण पुन: पुन: कुर्य्यात् ॥ ६॥४॥ पुनर्माण्डूकस्य कारिकायाम् । ओंकारं पादशो विद्यात् पादामात्रा न संशय: ॥ ओंकारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥ २४ ॥ ५ ॥ पुनर्योगशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् । वर्णत्रयात्मका ह्येते रेचकपूरककुम्भका: ॥ य एष प्रणव: प्रोक्त: प्राणायामश्च तन्मय: ॥ इड़या वायुमारोप्य पूरयेत्योत्तरस्थितम् ॥ शनै: षोड़शभिर्मात्रैरकारं तत्र संस्मरेत् ॥ धारयेत् पूरितं पश्चाच्चतु:षष्ट्या च मात्रया ॥ उकारं मूर्त्तिमात्रापि संस्मरन् प्रणवं जपेत् ॥ तत: पिङ्गलयापूर्य्य मात्रै: षोड़शभिस्तथा ॥ मकारं मूर्त्तिमात्रापि संस्मरन् सुसमाहित: ॥ पूरितं धारयेत् प्राणं प्रणवं विंशतिद्वयम् ॥ जपेदत्र स्मरन् मूर्त्तिं मकाराख्यं महेश्वरम् ॥ उत्तरार्द्धे अध्या० ६।२+८ ॥ ६ ॥ पुन: पञ्चदश्याम् । य उपास्ते त्रिमात्रेण ब्रह्मलोके सनीयते ॥ स एतस्माज्जीवघनात् परमपुरुषमीक्षते ॥ परि० ८।१४४ ॥ ७ ॥ पुनर्गायत्रीतन्त्रे । वर्णभेदमविज्ञाय यदि सन्ध्या-[गायत्रीं] मुपास्महे ॥ वृथा भवति सा सन्ध्या न सन्ध्या फलमाप्नुयात् ॥ वर्णानां चिन्तनं ध्यानं सम्यक् पापप्रणाशनम् ॥ त्रिसन्ध्यं कुरुते यस्मात् तस्मात् सन्ध्येति कथ्यते ॥ पट० १ ॥ ८ ॥ पुन: कामधेनुतन्त्रे । ध्यानावधारणे चैव तथा योगसमाधिना (१)

(१) अथ वर्णानां ध्यानं निर्दिश्यते । तथाच सर्ववर्णानां ध्यानं वक्ष्यामि संप्रणु ॥ कोटिचन्द्रप्रतीकाशां पुण्डरीकोपरिस्थिताम् ॥ भ्रमद्भ्रमरलीलाभां नयनत्रयराजिताम् ॥

वर्णज्ञानं यदा नास्ति किं तस्य जपपूजने ॥ शृणु तत्त्व मकारस्य अतिगोप्यं वरानने ! ॥ शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ॥ पञ्चदेवमयं वर्णम् शक्तित्रयसमन्वितम् ॥ निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्त्तिमान् ॥ विन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणी । उकारः परमेशानि ! तारः कुण्डलिनी स्वयम् ॥ पीतचम्पक-संकाशं पञ्चदेवमयं सदा ॥ पञ्चप्राणमयं देवि ! चतुर्वर्गप्रदाय-कम् ॥ मकारं शृणु चार्वङ्गि ! स्वयं परमकुण्डली ॥ अरुणादित्य-संकाशं चतुर्वर्गप्रदायकम् ॥ त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा ॥ आत्मादितत्त्वसंयुक्तं हृदिस्थं प्रणमाम्यहम् ॥ पट० ५ ॥ ८ ॥ (प्रश्नः) अकारोकारमकारमात्रात्रयेण का ज्ञातव्या ? ॥ (उत्तरम्) गुणकर्म्मानुसारेण गायत्र्येव मात्रास्वरूपतया ज्ञातव्या ॥ तत्र प्रमाणम् ॥ पद्मापासनस्थः पुमान्नासाग्रे शशभृद्बिम्बज्यो-त्स्नाजालवितानिताऽकारमूर्त्तीरक्ताङ्गी हंसवाहिनी दण्डहस्ता बाला गायत्री भवति । उकारमूर्त्तिः श्वेताङ्गी तार्क्ष्य (१) वाहिनी युवती चक्र (२) हस्ता सावित्री भवति ॥ मकारमूर्त्तिः कृष्णाङ्गी वृषभवाहिनी(३) वृद्धा त्रिशूलधारिणी(४) सरस्वती भवति । अ-कारादित्रयाणां सर्वकारणमेकाक्षरं परं ज्योतिः प्रणवं भव-तीति ध्यायेत् ॥ इति शाण्डिल्योपनिषदि ॥ ६ ॥ १ ॥ पुनाराज-

---

नानाशास्त्रप्रवक्त्रींच विद्याभ्यासमयीं सदा ॥ नानावादमयीं देवीं श्वेतांशुकपरिष्कृताम् ॥ शुक्लाभरणदीप्ताङ्गीं शुक्लवस्त्रोत्तरीयिणीम् ॥ एवं ध्यात्वा जगद्धात्रीं मातृकां जगदम्बिकाम् ॥ प्रजपेद्दशधा मन्त्रमेकधा वा जपेत्तु यः ॥ सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा ॥ इति कामधेनुतन्त्रे ॥ पट० ७ ॥

(१) तार्क्ष्यवाहिनीस्थाने वृषभवाहिनीति शुद्धम् ॥ (२) चक्रहस्तास्थाने त्रिशूलहस्तेति शुद्धम् ॥ (३) वृषभवाहिनीस्थाने तार्क्ष्यवाहिनी वा गरुडवाहिनीति शुद्धम् ॥ (४) त्रिशूल-धारिणी स्थाने चक्रधारिणीति शुद्धम् ॥

योगान्तर्गतब्रह्मज्ञानतन्त्रे । ध्यायेदाद्याक्षरं तत्र प्रणवस्य समाहितः ॥ अकारमूर्त्तिं रक्ताङ्गीं गायत्रीं हंसवाहिनीम् ॥ उकारमूर्त्तिमध्यस्थां युवतीं शुक्लविग्रहाम् ॥ गरुड़वाहिनीं देवीं मकारश्चार्द्धमात्रकम् ॥ पट० ६ ॥ २ ॥ पुनर्ज्ञानसङ्कलिनीतन्त्रे । अकारः सात्त्विको ज्ञेय उकारो राजसः स्मृतः ॥ मकारस्तामसः प्रोक्तस्त्रिभिः प्रकृतिरूपिणी॥ अक्षरा प्रकृतिः प्रोक्ता अक्षरः स्वयमीश्वरः॥ ईश्वरा[गायत्र्या]न्निर्गता सा हि प्रकृतिर्गुणबन्धना ॥ ९९ ॥ २ ॥ पुनर्गायत्रीतन्त्रे । प्रथमप्रणवे वामा ज्येष्ठा मध्ये च वैष्णवी ॥ तथैव शेषप्रणवे रौद्री संहारकारिणी ॥ पट० २ ॥ पुनस्तत्रैव । वामा रजोगुणा नित्या तरुणादित्यसन्निभा ॥ दलिताञ्जनसंकाशा रौद्री तमोगुणा स्मृता ॥ पट० १ । पुनस्तत्रैव । वामा धर्म्मप्रदा विन्दु ज्येष्ठा अर्द्धप्रदा तथा ॥ रौद्री कामप्रदा विन्दुः औविन्दु[-अर्द्धमात्रा]र्मोक्षदायिनी ॥ पट० १ ॥ ४ ॥ पुनाराधातन्त्रे । पञ्चाशदक्षरं देवि ! मूर्त्तिविग्रहधारिणी ॥ श्यामाङ्गी च तथा गौरी शुद्धस्फटिकसन्निभा ॥ पट० ४ ॥ पुनाराजयोगान्तर्गतब्रह्मज्ञानतन्त्रे ॥ अकारश्च तथोकारो मकारश्चाक्षरत्रयम् ॥ अतएव त्रयोमात्रा सत्त्वराजसतामसाः ॥ निर्गुणा योगगम्या न्या चार्द्धमात्रा च संस्थिता ॥ पट० ६ ॥ ६ ॥ तेनात्राकारोकारमकारमात्रात्रयस्वरूपेण गायत्र्याः स्वरूपमिति सिद्धम् ॥ अथ कस्माद्गायत्री(१)

---

(१) गायत्रीति—अथ कालगुणकर्म्मानुसारेण गायत्र्या ध्यानत्रयमाह ॥ गायत्रीध्यानम् ॥ प्रातःसन्ध्या रक्ता रक्तपद्मासनस्था रक्ताम्बरधरा रक्तवर्णा रक्तगन्धानुलेपना चतुर्मुखा अष्टभुजा त्रिनेत्रा "प्रतिवक्त्रं" दण्डाक्षमाला कमण्डलुस्रुक्स्रुवधारिणी, सर्वाभरणभूषिता गायत्री कौमारी ब्राह्मी हंसवाहिनी ऋग्वेदसहिता ब्रह्मदैवत्या त्रिपदा गायत्रीषट्कुक्षिः पञ्चशीर्षा अग्निमुखा रुद्रहृदया ब्रह्मकवचा सांख्यायनगोत्रा भूर्लोकव्यापिनी, अग्नि-

सावित्री सरस्वती वेत्युच्यते ?। तत्र गायत्र्याः निरुक्तिः पूर्वं निदर्शितः, अत्र सावित्रीसरस्वत्योर्निरुक्तिर्निर्दिश्यते ॥ "सावित्रीमन्वाह," कस्मात्सावित्रीमन्वाहेति ?, सविता वै प्रसवानामीशे सवितृ प्रसूता एवेनी तत्प्रणयन्ति तस्मात्सावित्रीमन्वाहेति ॥ ऐत्तरी० ब्रा० पं० १। अ० ५ मं० ३० ॥ १ ॥ पुनर्याज्ञवल्क्यवचनम् ॥ सवितृद्योतनात् सैव सावित्री परिकीर्त्तिता॥ जगतः प्रसवितृत्वात् वाक्रूपत्वात्सरस्वती ॥ २ ॥ पुनर्भरद्वाजस्मृतौ ॥ सवितृ [सूर्य्यस्तस्य] प्रकाशकरणात्सावित्र्यभिधीयते ॥ जगतः प्रसवित्रीति हेतुनानेन वापि च ॥ व्याने प्राणजिह्वासु सदावग्राहवर्त्तनात् ॥ सरस्वती नाम्ना च समाख्याता महर्षिभिः ॥ ३ ॥ पुनर्देवीपुराणे ॥ त्रिदशैरर्च्चिता देवी देवयागेषु पूजिता ॥ भावशुद्धस्वरूपा तु (२) सावित्री तेन सा स्मृता ॥ पुनस्तत्रैव ॥ श्रवणस्पन्दनार्थे च धातुवर्षो निपात्यते ॥ श्रवणात्तेजसोपाच सावित्री तेन सा स्मृता ॥

---

सत्त्वम् उदात्तानुदात्तस्वरितस्वरमकारः, आत्मज्ञाने विनियोगः ॥ १ ॥ सावित्रीध्यानम् ॥ मध्याह्नसन्ध्या श्वेता श्वेतपद्मासनस्था श्वेताम्बरधरा श्वेतगन्धानुलेपना पञ्चमुखी दशभुजा त्रिनेत्रा "प्रतिवक्त्रे" त्रिशूलाक्षमाला कमण्डलुकपालधारिणी सर्वाभरणभूषिता सावित्री युवती माहेश्वरी वृषभवाहिनी यजुर्वेदसंहिता रुद्रदैवत्या त्रिपदा सावित्री षट्कुक्षिः पञ्चशीर्षा, अग्निमुखा रुद्रशिखा ब्रह्मकवचा भरद्वाजगोत्रा भुवर्लोकव्यापिनी वायुस्तत्त्वम् उदात्तानुदात्तस्वरितस्वरमकारः श्वेतवर्णः, आत्मज्ञाने विनियोगः ॥ २ ॥ सरस्वतीध्यानम् ॥ सायंसन्ध्या कृष्णा कृष्णपद्मासनस्था कृष्णाम्बरधरा कृष्णवर्णा कृष्णगन्धानुलेपना कृष्णमाल्याम्बरधरा एकमुखी चतुर्भुजा त्रिनेत्रा शङ्खचक्रगदापद्मधारिणी सर्वाभरणभूषिता सरस्वती वृद्धा वैष्णवी गरुडवाहना सामवेदसंहिता विष्णुदैवत्या त्रिपदा षट्कुक्षिः पञ्चशीर्षा अग्निमुखी विष्णुहृदया रुद्रशिखी ब्रह्मकवचा कश्यपगोत्रा स्वर्लोकव्यापिनी सूर्य्यस्तत्त्वम् उदात्तानुदात्तस्वरितमकारः मोक्षपाते विनियोगः ॥३॥ इति श्रीमहर्षियाज्ञवल्क्येनोक्तम् गायत्र्युपनिषदि ॥

(२)भावशुद्धस्वरूपा त्विति—भाव उपासना, शुद्धः सतो गुणेन युक्तः स्वरूपी यस्याः सा

स्वर: स्वरणशीलत्वात् ज्ञेया सप्तस्वरात्मिका ॥ अतिप्रापणदाने वा तेन देवी सरस्वती ॥ अध्या० २७ ॥४॥ (य:) यद्गायत्र्या: स्वरूपम् (न:) अस्माकम् (धिय:) बुद्धी: (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये ओङ्कारतो गायत्र्युपासनावर्णनं चतुर्थप्रकरणम् ।

---

अथ पञ्चमार्थमाह ॥

अन्वय: ॥ सवितुर्देवस्य तद्भर्गो ओम् धीमहि भूर्भुव: स्ववरेण्यम् यो नो धिय: प्रचोदयात् ॥ ५ ॥

पदार्थ: ॥ (सवितु:) अग्ने "मण्डलान्तर्गतं" [कथम्भूतस्य सवितु: ?] (देवस्य) प्रकाशमानस्य (तद्भर्ग:) तत्पापानामभर्जननाशहेतुभूतम् ऋग्यजु:सामाख्यम् तेजो गायत्र्या: स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायाम: [काभि: शक्तिभि: ?] (भूर्भुव: स्व:) इच्छाज्ञानक्रियादिशक्तिभि: [कथम्भूतम् स्वरूपम्?] (वरेण्यम्) अस्माभिरुपासनीयम् (य:) यद्गायत्र्या: स्वरूपम् (न:) अस्माकम् (धिय:) बुद्धी: (प्रचोदयात्) प्रेरयति ॥५॥

भाष्यम् ॥ (सवितु:) अग्ने(१)"मण्डलान्तर्गतं" [कथम्भूतस्य

---

भावशुद्धस्वरूपा, नित्योपासनायाम् सती गुणस्वरूपेति भाव: । यद्वा, भाव: स्वस्वभावस्तेन स्वभावेन शुद्धम् गुणकर्म्मणा रहितं निष्कलं ज्योति:स्वरूपं यस्या: सा भावशुद्धस्वरूपा, शिवस्वरूपेति भाव: ॥

(१) अग्ने मण्डलान्तर्गतेति—सहोवाच गार्ग्यो य एवायमग्नौ पुरुष [ऋग्यजु:सामाख्यम् गायत्र्या: स्वरूपम्] एतमेवाहं ब्रह्मोपास इति ॥ बृहदारण्योपनिषदि ।४।१।७॥

सवितुः ?] (देवस्य) प्रकाशमानस्य (तद्भर्गः) तत्पापानाशञ्ज्वंन-नाशहेतुभूतम् ऋग्यजुःसामाख्यं तेजो गायत्र्याः स्वरूपम् ॥ तत्र प्रमाणम् ॥ सोऽग्निर्देवयोनिः ऋङ्मयो यजुर्मयः साममयो ब्रह्ममयोऽमृतमयो आहुतिमयः सर्वेन्द्रियः सम्पन्नः ॥ इति गोपथ-ब्राह्मणे ॥ उत्त० २।६॥ (ओम्) ब्रह्म (धीमहि) ध्यायामः [काभिः शक्तिभिः ?] (भूर्भुवः स्वः) इच्छाज्ञानक्रियादिशक्तिभिः ॥ तत्र प्रमाणम् ॥ इच्छाशक्तिश्च भूःकारः क्रियाशक्तिर्भुवस्तथा ॥ स्वः-कारो ज्ञानशक्तिश्च भूर्भुवःस्वः स्वरूपकः ॥ इति गायत्रीतन्त्रे द्वितीयब्राह्मणपटले ॥ १ ॥ पुनाराजयोगान्तर्गतब्रह्मज्ञानतन्त्रे ॥ व्यक्तात्मा प्रथमा मात्रा द्वितीया व्यक्तसंज्ञिता ॥ तृतीयामात्रा-चिच्छक्तिरर्द्धमात्रा परम्पदम् ॥ पट० ६॥२॥ तेनात्र भूःशब्देन इच्छा-शक्तिः, भुवःशब्देन क्रियाशक्तिः, स्वःशब्देन ज्ञानशक्तिरिति सि-द्धिम् ॥ [कथम्भूतम् स्वरूपम् ?] (वरेण्यम्) अस्माभिरुपासनीयम् (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोद-यात्) प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये इच्छाज्ञानक्रियादिशक्तितो गायत्र्युपासनावर्णनं पञ्चमप्रकरणम् ॥ ५ ॥

---

अथ षष्ठार्थमाह ॥

अन्वयः ॥ सवितुर्देवस्य तद्वरेण्यम् भर्गो ओम् धीमहि भूर्भुवःस्वर्यो नो धियः प्रचोदयात् ॥ ६ ॥

पदार्थः ॥ (सवितुः) सूर्य्यादे "र्मण्डलान्तर्गतं" [कथ-म्भूतस्य सवितुः ?] (देवस्य) प्रकाशमानस्य (तद्वरे-

ण्यम्) तच्छ्रेष्ठमुपासनीयम् (भर्गः) तेजो गायत्र्याः स्वरूपम् (आम्) ब्रह्म (धीमहि) ध्यायेम [केन प्रकारेण ?] (भूर्भुवः स्वः) पादादिशीर्षपर्य्यन्तेन (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति ॥ ६ ॥

भाष्यम् ॥ (सवितुः) सूर्य्यादि "मंडलान्तर्गतं" [कथम्भूतस्य सवितुः ?] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) तच्छ्रेष्ठमुपासनीयम् (भर्गः) भर्गाख्यं तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम [केन प्रकारेण ?] (भूर्भुवः स्वः) पादादिशीर्षपर्य्यन्तेन ॥ तत्र प्रमाणम् ॥ उरुः पृथुः सुभूर्भुवः इति त्वोपास्महे वयम् ॥ अथर्व० का० १२ । अनु० ४ [तत्र भाष्यम् । हे ब्रह्म वा गायत्रि ! (उरुः) जङ्घा (पृथुः) कटिः (सु) पादः (भूः) शिरः (भुवः) बाहूः (इति) अनेन शिरःपादादियुक्ततवसाकारस्वरूपेण (त्वा) त्वां ज्ञात्वा ध्यात्वा वा (वयम्) ब्राह्मणक्षत्रियवैश्यादयो मनुष्याः (उपास्महे) सततमुपास्महे] ॥ १ ॥ पुनर्बृहदारण्योपनिषदि । य एष एतस्मिन्मण्डले [बाह्ये सूर्य्यमण्डले, स्वशरीरे सहस्रारे] पुरुषस्तस्य भूरिति शिर एकꣳशिर एकमेतदक्षरम् भुव इति बाहू द्वौ बाहू एते अक्षरे, स्वरिति प्रतिष्ठा [प्रकर्षेण तिष्ठन्ति यस्मात्तत् प्रतिष्ठाशब्देन चरणेति बोद्धव्यम्] द्वे प्रतिष्ठे द्वौ एते अक्षरे ॥ ७।५। ७ ॥ २ ॥ पुनः कपिलगीतायाम् ॥ आपादाच्छीर्षपर्यन्तं मूर्त्तिरूपं प्रदृश्यते ॥ अकारमातृकं ह्येतत्ताम्रवर्णसुशोभितम् ॥ सर्वेन्द्रियाणि व्यापार ऋग्वेदो वर्णितस्तथा ॥ विश्वाभिमानीसम्प्रोक्तो रजोगुणसमाश्रितः ॥ अपञ्चीकृतभूतेभ्यो लिङ्गदेहः स

उच्यते॥ उकारमातृका तत्र स्वप्नावस्थाभिधीयते॥ तत्रान्यथा ज्ञानमस्मि वायुतत्त्वं प्रतिष्ठितम्॥ शुक्लवर्णात्मकं रूपं वाक्तथा मध्यमा स्मृता॥ यजुर्वेद: स विज्ञेयो मनो वैकारिकं स्मृतम्॥ मकारहृदयस्थाने तमोगुणसमुद्भवम्॥ मकारमातृका यत्र अवस्था तु सुषुप्तिका॥ सामवेदस्तु विज्ञेयो हृदिपद्मेषु शोभित:॥ अध्या० ५॥२॥ पुनर्योगशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् उत्तरार्द्धे। आपायो हृदयान्तञ्च वह्निस्थानं प्रकीर्त्तितम्॥ आहृन्मध्याद्भ्रुवोर्मध्ये यावद्वायुकुलं [समूह:]स्मृतम्॥ आभ्रूमध्यात्तु मूर्द्धान्तमाकाशमिति चोच्यते॥ अध्या० ९।७+८॥४॥ पुनर्निरुत्तरतन्त्रे॥ सगुणज्योतिषां मूर्त्तिं हृदिस्थां कालिकां स्मरेत्॥ आपादाच्छीर्षपर्य्यन्तं पूज्या यत्नादिभि: प्रिये!॥ पट० ३॥५॥ तेनात्र भूर्भुव:स्व:शब्देन ध्यानकाले देवता[illegible]नि चिन्तनीयमिति गृह्यते॥ (य:) यद्गायत्र्या: स्वरूपम् ( [illegible] अस्माकम् (धिय:) बुद्धी: (प्रचोदयात्) प्रेरयति प्रेरयेत् वा।

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये आशीर्षपादान्तती गायत्र्युपासनावर्णनं षष्ठप्रकरणम्।

---

अथ सप्तमार्थमाह।

अन्वय:॥ सवितुर्देवस्य यद्वरेण्यम् भर्गो ओम् धीमहि भूर्भुव: स्वर्यो नो धिय: प्रचोदयात्॥ ७॥

पदार्थ:॥ (सवितु:) प्राणस्या"न्तर्गतं" [कथम्भूतस्य सवितु: ?] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) तद्वरणीयम् उपासनीयम् (भर्ग:) तेज: प्राणशक्त्याख्यं गा-

यत्र्याः स्वरूपम् (ओम) ब्रह्म (धीमहि) ध्यायेम [कैर्धीमहि ?] (भूर्भुवःस्वः) प्राणायामैः (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥ ७ ॥

भाष्यम् ॥ (सवितुः) प्राणस्य ॥ तत्र प्रमाणम् ॥ प्राण एव सविता ॥ गो० ब्रा० पू०।१।३३॥ प्राणो वै सविता ॥ ऐत० ब्रा० १।४।१९ तेनात्र सवितृशब्देन प्राणेति सिद्धम् ॥ "मण्डलान्तर्गतं ॥" [कथम्भूतस्य सवितुः ?] (देवस्य) प्रकाशमानस्य ॥ "प्राणदेवतेति निरु० दै० २।२१ ॥" (तद्वरेण्यम्) तद्वरणीयमुपासनीयम् (भर्गः) तेजः प्राणशक्त्याख्यं (१) गायत्र्याः स्वरूपम् ॥ तत्र प्रमाणम् ॥ प्राणो गायत्री ॥ श० ब्रा० १३।५।१५ ॥ प्राणो वै बलं तत्प्राणेषु प्रतिष्ठितं तस्मादाहुर्बलꣳसत्यादोजीय इत्येवमेषा गायत्र्यध्यात्मं प्रतिष्ठिता ॥ सा हैषा गयांस्तत्रे, प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यद्गयांस्तत्रे तस्माद्गायत्री नाम ॥ श० ब्रा० १४।८।१६ ॥ पुनश्छान्दोग्योपनिषदि ॥ मनोमयः प्राणशरीरो भारूपः ॥६।१२ ॥ तत्र भाष्यम् ॥ अतएव प्राणः शरीरं प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितः ॥ यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः इति श्रुतिः ॥ स शरीरं यस्य स प्राणः शरीरः ॥ मनोमयः प्राणशरीरं नेति च श्रुत्यन्तरात् । भारूपः, भादीप्तिश्चैतन्यल-

---

(१) प्राणशक्त्याख्यमिति—अथ प्राणशक्त्याख्यगायत्र्याः स्वरूपस्य ध्यानमाह ॥ रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः पाशाङ्कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्चबाणान् ॥ बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या, देवी बालार्कवर्णा भवतु शुभकरी प्राणशक्तिः परा नः ॥ इति रुद्रयामलान्तर्गतगायत्रीपूजापद्धतौ ॥

क्षणं रूपं यस्य स भारूपमिति शङ्करभाष्यम् ॥ अतएव प्राणाख्यगायत्र्यास्तेजः स्वरूपमिति सिद्धम् ॥ (ओम्) ब्रह्म (धीमहि) ध्यायेम [कैधीमहि ?] (भूर्भुवःस्वः) प्राणायामैः ॥ तत्र प्रमाणम् ॥ भूरिति वै प्राणः, भुवरित्यपानः, स्वरिति व्यानः ॥ इति तैत्तिरीयोपनिषदि ॥ अनु० ५।३ ॥ तेनात्र भूर्भुवःस्वःशब्देन प्राणादिवायुनां प्राणायामकाले निरोधनमिति गृह्यते ॥ (प्रश्नः) प्राणायामस्य किं प्रयोजनम् ? ॥ (उत्तरम्) मनुष्याणां शरीरे अग्न्यादयो भूताः वर्त्तन्ते येन भौतिकशरीरेति कथ्यते, तेषां भूतानां शुद्धिर्वा तपसा मोक्षोपायकरणार्थेऽस्य शरीरस्य चिरकालपर्य्यन्तं धारणमेव प्रयोजनम् ॥ तत्र प्रमाणम् ॥ चले वाते चलो बिन्दुर्निश्चले निश्चलो भवेत् ॥ योगी स्थाणुत्वमाप्नोति ततो वायुं निरुन्धयेत् ॥ यावद्वायुःस्थितो देहे तावज्जीवो न मुञ्चति ॥ मरणं तस्य निष्क्रान्तिस्ततो वायुं निरुन्धयेत् ॥ यावद्वायुःस्थितो देहे तावज्जीवो न मुञ्चति ॥ यावद्दृष्टिर्भ्रुवोर्मध्ये तावत्कालं भयं कुतः ॥ इति योगचूडामण्युपनिषदि ॥ ८९+९१ ॥ पुनस्तत्रैव ॥ बद्धपद्मासने योगी नमस्कृत्य गुरुं शिवम् ॥ नासाग्रे दृष्टिरेकाकी प्राणायामं समभ्यसेत् ॥ १०६ ॥ १ ॥ पुनर्योगतत्त्वोपनिषदि । प्रातर्मध्यं दिने सायमर्द्धरात्रे च कुम्भकान् ॥ शनैरशीतपर्य्यन्तं चतुर्वारं समभ्यसेत् ॥ २ ॥ पुनस्त्रिशिखिब्राह्मणोपनिषदि ॥ नाभिकन्दे च नासाग्रे पादाङ्गुष्ठे च यत्नवान् ॥ धारयेन्मनसा प्राणान् सन्ध्याकालेषु वा सदा ॥ १०८ ॥३॥ पुनर्योगशिखोपनिषदि ॥ तस्माद्योगं तमेवाऽऽदौ साधको नित्यमभ्यसेत् ॥ मुमुक्षुभिः प्राणजयः कर्त्तव्यो मोक्षहेतवे ॥ ६६ ॥ ४ ॥ पुनः श्रीजाबालोपनिषदि । एवं समभ्यसेन्नित्यं प्राणायामं मुनीश्वरः ॥ खं० ६।१० ॥ ५ ॥ पुनः शाण्डिल्योपनिषदि ।

धारयेन्मनसा प्राणं सन्ध्याकालेषु वा सदा ॥ सर्वरोगविनिर्मुक्तो भवेद्योगी गतक्लमः ॥ अध्या० ५।४४। पुनस्तत्रैव ॥ संध्ययोर्ब्राह्मणः काले वायुमाकृष्य यः पिबेत् ॥ त्रिमासात्तस्य कल्याणी जायते वाक् सरस्वती ॥ अध्या० ४।४६ ॥ पुनस्तत्रैव। मासमेकं त्रिसंध्यन्तु जिह्वामारोप्य मारुतम् ॥ त्रिसेव्य त्रिदशाऽऽहारं धारयेत्तुन्दमध्यमे ॥ ज्वराः सर्वे विनश्यन्ति विषाणि विविधानि च ॥ अध्या० ५।५१ ॥ ६ ॥ पुनर्योगशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् ॥ संध्ययोरुभयोर्नित्यं गायत्र्याः प्रणवेन वा ॥ प्राणसंयमनं कुर्य्यात् ब्राह्मणो वेदपारगः ॥ उत्तरार्द्धे अध्या० ६।१८ ॥ पुनस्तत्रैव ॥ बाह्यात् प्राणं समाकृष्य पूरयित्वोदरस्थितम् ॥ नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः ॥ धारयेन्मनसा प्राणं संध्याकाले च सर्वदा ॥ सर्वरोगविनिर्मुक्तो जीवेद्योगी जितश्रमः ॥ अध्या० ६।२६ ॥ ७ ॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ संध्याकाले प्रभाते च यः करोति दिवानिशम् ॥ वशी षोड़शसंख्याभिः प्राणायामान् पुनः पुनः ॥ सम्वत्सरवशी ध्यात्वा खेचरी योगराड़् भवेत् ॥ पट० १०।४२ ॥ पुनस्तत्रैव ॥ प्राणायामं महाधर्म्मं वेदानाम(१)प्यगोचरम् ॥ सर्वपुण्यस्य सारं हि पापराशितुलानलम् ॥ पट० १७।४० ॥ ८ ॥ पुनर्गन्धर्वतन्त्रे ॥ मनोजीवात्मनः शुद्धिः प्राणायामेन जायते ॥ अन्तर्गतं यच्च मलं तच्च शुद्धिः प्रजायते ॥ प्राणायामैर्विना देवि ! कृतं कर्म्म निरर्थकम् ॥ प्राणायामात्परं तत्त्वं प्राणायामात्परं तपः ॥ प्राणायामात्परं ज्ञानं प्राणायामात्परं पदम् ॥ प्राणायामात्परं योगं प्राणायामात्परं धनम् ॥ नास्ति नास्ति पुनर्नास्ति कथितं तव सुव्रते !॥ वत्सराभ्यासयोगेन ब्रह्मरन्ध्रादिविद्रुमम् ॥ चैतन्या वरणं यद्वत्

(१) वेदानामपि --विद्वज्ज्ञानेन ज्ञानिनामित्यर्थः ॥

क्षीयते नात्र संशयः॥ प्राणायामं विना मुक्तिमार्गो नास्ति मयोदितः॥ प्राणायामेन मुनयः सिद्धमाहुर्न चान्यथा॥ प्राणायामपरो योगो न योगी शिव एव सः॥ पट० १०॥९॥ पुनारुद्रयामलोत्तरतन्त्रे॥ प्राणवायुस्थिरो यावत्तावन्मृत्युभयं कुतः॥ ऊर्द्ध्वरेता भवेद्यावत्तावत्कालभयं कुतः॥ पट० २६।८६॥१०॥ (प्रश्नः) तत्र कः प्राणायामः?॥ (उत्तरम्) प्राणादिवायूनां निरोधनमेव॥ तत्र प्रमाणम्॥ तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः॥ योगसूत्रे॥ पा० २। सू० ४८॥ तत्र भाष्यम्॥ सत्यासनजये बाह्यस्य वायोराचमनं श्वासः कोष्ठस्य वायोर्निःसारणं प्रश्वासस्तयोर्गतिविच्छेद उभयाभावः प्राणायाम इति व्यासभाष्ये॥ १॥ पुनर्गन्धर्वतन्त्रे॥ गमनागमनं वायोः प्राणस्य धरणं तथा॥ प्राणायाम इति प्रोक्तो योगशास्त्रविशारदैः॥ प्राणोवायुरितिख्यात आयामस्तन्निरोधनम्॥ प्राणायाम इति प्रोक्तो योगिनां योगसाधनम्॥ पट० १०॥२॥ प्राणायामस्य का विधिरित्युच्यते॥ तत्रोपविश्य मेधावी पद्मासनसमन्वितः॥ ऋजुकायः प्राञ्जलिश्च प्रणमेदिष्टदेवताम् [गायत्रीम्]॥ ततो दक्षिणहस्तस्य अङ्गुष्ठेनैव पिङ्गलाम्॥ निरुध्य पूरयेद्वायुमिड़या तु शनैः शनैः॥ यथाशक्त्यविरोधेन ततः कुर्याच्च कुम्भकम्॥ पुनस्त्यजेत्पिङ्गलया शनैरेव न वेगतः॥ पुनः पिङ्गलया पूर्य्य पूरयेदुदरं शनैः॥ धारयित्वा यथाशक्तिरेचयेदिडया शनैः॥ यया त्यजेत्तया पूर्य्य धारयेदविरोधतः॥ ३५+३९॥ १॥ पुनर्महानिर्वाणतन्त्रे शिववाक्यम्॥ मध्यमानामिकाभ्यान्तु दक्षहस्तस्य पार्वति!॥ वामनासापुटं धृत्वा दक्षनासापुटे न च॥ पूरयेत्पवनं मन्त्री [गायत्री मन्त्रजापकः] मूलमष्टमितं जपन्॥ अङ्गुष्ठेन दक्षनासां धृत्वा कुम्भकयोगतः॥ जपेद्द्वात्रिंशतावृत्या

ततो दक्षिणनासया ॥ शनैः शनैस्त्यजेद्वायुम् जपन् षोड़शधा मनुम् ॥ वामनासापुटेऽप्येवं पूरकुम्भकरेचकम् ॥ पुनर्दक्षिणतः कुर्य्यात् पूर्ववत्सुरपूजिते ! ॥ प्राणायामविधिः प्रोक्तो ब्रह्ममन्त्रस्य साधने ॥ उत्ता० ॥२ । ४४+४८ ॥ २ ॥ अथ प्राणायामैन गायत्र्या उपासना कर्त्तव्या इति स्पष्टीक्रियते ॥ भूतं भव्यं भविष्यञ्च सर्वं प्राणे प्रतिष्ठितम् ॥ श्रेष्ठं तदेव भूतानां ब्रह्मयोनि(१)मुपास्महे ॥ इति महाभारतान्तर्गतवनपर्वणि ॥ अ० २१२ । ४ ॥ १ ॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ प्राणायामान् यः करोति साधकः स्थिरमानसः ॥ ध्यात्वा देवीं मूलपद्मे वीरो योगमवाप्नुयात् ॥ पट० २६ । ६७ ॥ २ ॥ पुनर्गायत्रीमन्त्रभाष्ये शङ्करस्वामिनाप्युक्तम् ॥ एवं विशिष्टा गायत्री प्राणायामैरुपास्येति ॥ ३ ॥ तेनात्र गायत्र्या उपासना प्राणायामैः कर्त्तव्यमिति सिद्धम् ॥ यद्वा, प्राणाऽपानव्यानान् गायत्रीस्वरूपेण धीमहि ॥ तत्र प्रमाणम् ॥ प्राणो गायत्रीति ॥ श० ब्रा० १३।५।१५ ॥ त्रयो वै प्राणाः प्राणोऽपानव्यान इति ॥ श० ब्रा० ८।४।३।४ ॥ प्राणो वा अपानो व्यानस्तिस्रो देव्यः ॥ ऐत० ब्रा० २।१।४ ॥ तेनात्र प्राणोऽपानो व्यान इति भूरादिव्याहृतित्रयवाचिकशब्देभ्यो गायत्र्याः स्वरूप इति स्फुटम् ॥ (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये प्राणायामतो गायत्र्युपासनावर्णनं सप्तमप्रकरणम् ॥७॥

---

(१) ब्रह्मयोनिमिति—योनिशब्दः स्थानवाचकस्तेन ब्रह्मणः स्थानमित्यर्थः ॥

अथाष्टमार्थमाह ॥

अन्वयः ॥ सवितुर्देवस्य तद्वरेण्यम् भर्गो ओम् धीमहि भूर्भुवःस्वर्यो नो धियः प्रचोदयात् ॥ ८ ॥

पदार्थः॥ (सवितुः) वायो "र्मण्डलान्तर्गतम्" [कथम्भूतस्य सवितुः ?] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) तद्वरणीयमुपासनीयम् (भर्गः) वायव्याख्यम् तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम [कस्मिन् काले ?] (भूर्भुवः स्वः) प्रातर्मध्याह्ने सायंकाले च (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥८॥

भाष्यम् ॥ (सवितुः) वायो(१) "र्मण्डलान्तर्गतं" ॥ तत्र प्रमाणम् ॥ वायुरेव सवितेति ॥ गो० ब्रा० पू० ५।२२ ॥ वायुरेव सवितेति ॥ सावित्र्युपनिषदि॥[कथम्भूतस्य सवितुः?] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) तद्वरणीयम् उपासनीयम् वा (भर्गः) वायव्याख्यं तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम ॥ अथ वायव्याख्यशब्देन गायत्र्युपासनानिर्दिश्यते॥ सा देवी [गायत्री] वायवीशक्तिः परमाकाशरूपिणी ॥ इति रुद्रयामलोत्तरतन्त्रे ॥ पट० १७।१७॥ पुनस्तत्रैव ॥ वेदाभ्यासं समाकल्य नानाशास्त्रार्थनिर्णयम् ॥ समुत्पन्नां महाशक्तिं समालोक्य भजेद्यतिः ॥ सर्वत्र व्यापिकां शक्तिं कामरूपां निरक्षराम् ॥ व्यक्ताव्यक्ताखिरपदां वायवीं तां भजेद्-

(१) वायोरिति—वायोर्मण्डलान्तर्गतगायत्र्युपासनीयेति ॥ सहोवाच गार्ग्यो य एवायं वायौ पुरुष [वायव्याख्यम् गायत्र्याः स्वरूपम्] एतमेवाहं ब्रह्मोपास इति ॥ बृहदा० उप० ४।१।५ ॥

यतिः॥ पट० २५।११२+११३॥ पुनस्तत्रैव॥ तामेव वायवीं शक्तिं सूक्ष्मरूपां स्थिराशयाम्॥ आनन्दरसिकां गौरीं ध्यायेत् श्वासनिवासिनीम्॥ पट० २५।११६॥ तेन वायव्याख्यशब्देन गायत्र्या गायत्र्या उपासना सिद्धेति॥ (प्रश्नः) वायव्याख्यशब्देन गायत्र्या उपासनायाः किम्प्रयोजनम्? (उत्तरम्) अकालमृत्युहरणमेव॥ तत्र प्रमाणम्॥ नाकाले म्रियते कश्चिद्यदि जानाति वायवीम्॥ वायवी परमाशक्तिरिति तन्त्रार्थनिर्णयः॥ रुद्रया० उत्त० तं० पट० १४।६८॥ [कस्मिन् काले?] (भूर्भुवःस्वः) प्रातर्मध्याह्ने सायंकाले च॥ तत्र प्रमाणम्॥ भूर्जन इति प्रातःसवनं ऋग्भिः भुवर्जन इति माध्यन्दिने यजुर्भिः, स्वर्जन इति तृतीयसवनं सामभिः॥ इति गोपथब्राह्मणे उत्तरार्द्धे ५।२५॥ १॥ पुनः॥ भूरिति वै प्राणः। तैत्ति० उप० ५।३॥ प्राणो वै गायत्री। श० १३।५।१५॥ गायत्रं हि प्रातः सवनम्॥ गो० ब्रा० उ० ३।१६॥ तेनात्र भूःशब्देन प्रातः सवनमिति गृह्यते॥१॥ भुव इत्यन्तरिक्षम्। तैत्ति० उप० ४।१॥ अन्तरिक्षलोको माध्यन्दिनसवनम्। गो० ब्रा० उ० ३।१६॥ तेनात्र भुवःशब्देन माध्यन्दिनसवनमिति गृह्यते॥२॥ सुवरित्यादित्यः तैत्ति० उप० ।५।२॥ जगत्या आदित्यानां पत्नी। गो० ब्रा० उ० ।२।८॥ जागतं वै तृतीयसवनम्। गो० ब्रा० उ० ४।१६॥ तेनात्र स्वःशब्देन तृतीयसवनमिति गृह्यते ।३॥२॥ पुनर्यजुर्वेदे॥ पातनो अश्विनादिवा पाहिनक्तंᳪसरस्वति॥ यजु० अध्य० २० म० ६२॥३॥ पुनस्त्रिपुरतापिन्युपनिषदि॥ गायत्री प्रातः सावित्री मध्यन्दिने सरस्वती सायमिति॥४॥ पुनर्दक्षसंहितायाम्॥ सन्ध्या [सायंकाले]त्तु प्रभाते च मध्याह्ने च ततः पुनः॥ सन्ध्यां [गायत्रीं] नोपासते यस्तु ब्राह्मणो हि विशेषतः॥ स जीवन्नेव शूद्रः स्यान्मृतः

श्चा चैव जायते ॥ अध्या० २।१६ ॥ (यः) यद् गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो उपासनाकालनिरूपणम् अष्टमप्रकरणम्।

—०—

अथ नवमार्थमाह ॥

अन्वयः ॥ सवितुर्देवस्य तद्वरेण्यम् भर्गो ओम् धीमहि भूर्भुवःस्वर्यो नो धियः प्रचोदयात् ॥९॥

पदार्थः ॥ (सवितुः) सूर्य्यादि "मण्डलान्तर्गतं" [कथम्भूतस्य सवितुः?] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) तद्वरणीयम् उपासनीयम् वा (भर्गः) तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम [कस्मिन् स्थाने?] (भूर्भुवःस्वः) पृथिव्यन्तरिक्षद्युस्थानेषु (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥९॥

भाष्यम् ॥ (सवितुः) सूर्य्यादि "मण्डलान्तर्गतं" [कथम्भूतस्य सवितुः] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) यच्छ्रेष्ठमुपासनीयम् (भर्गः) तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम [कस्मिन् स्थाने?] (भूर्भुवःस्वः) पृथिव्यन्तरिक्षद्युस्थानेषु ॥ तत्र प्रमाणम् ॥ भूरिति वा अयं लोकः, भुव इत्यन्तरिक्षम्, सुवरित्यसौ लोकः ॥ इति तैत्ति० उप० ५।२ ॥१॥ पुनर्गायत्रीतन्त्रे द्वितीयब्राह्मणपटले ॥ भूकारस्य तु भूर्लोको भुवर्लोको भुवस्तथा ॥ स्वःकारः

सुरलोकश्च गायत्र्यारासनं स्मृतम् ॥ पट० १ ॥ २ ॥ पुनर्म्मार्क-ण्डेयपुराणे ॥ भूर्लोकोऽयं स्मृता भूमिरन्तरीक्षं दिवः स्मृतम् ॥ दिव्याख्यश्च तथा स्वर्गस्त्रैलोक्यमिति गद्यते ॥ अध्या० ७९।८ ॥३॥ तेनात्र भूःशब्देन पृथिवी भुवःशब्देनान्तरिक्षम् स्वःशब्देन सु-रलोकमिति उच्यते ॥ (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥ ९ ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीचित्ती व्याख्यानविवरणं नवमप्रकरणम् ॥

—०—

अथ दशमार्थमाह ।

अन्वयः ॥ सवितुर्देवस्य तद्वरेण्यम् भर्गो ओम् धीमहि भूर्भुवःस्वर्यो नो धियः प्रचोदयात् ॥ १० ॥

पदार्थः ॥ ( सवितुः ) सूर्य्यादि"मण्डलान्तर्गतं" [कथम्भूतस्य सवितुः ?] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) तद्वरणीयमुपासनीयम् वा (भर्गः) तेजो गायत्र्याः स्वरूपम् ( ओम् ) ब्रह्म ( धीमहि ) ध्यायेम [कस्मिन् स्थाने ?] (भूर्भुवःस्वः) षट्चक्रान्तर्गतमूलाधारविशुद्धसहस्रारपद्मादिषु (यः) यद्गायत्र्याः स्वरूपम् (नः) अस्माकम् (धियः) बुद्धीः ( प्रचोदयात् ) प्रेरयति प्रेरयेत् वा ॥ १० ॥

भाष्यम् ॥ (सवितुः) सूर्य्यादि"मण्डलान्तर्गतम्" [कथम्भूतस्य सवितुः ?] (देवस्य) प्रकाशमानस्य (तद्वरेण्यम्) तद्वरणीयम् उपा-

वनीयम् वा (भर्गः) तेजो गायत्र्याः स्वरूपम् (ओम्) ब्रह्म (धीमहि) ध्यायेम [कस्मिन् स्थाने ?] (भूर्भुवःस्वः) षट्चक्रान्तर्गतमूलाधारविशुद्धसहस्रारपद्मादिषु ॥ तत्र प्रमाणम्॥ मूलपद्मश्च भूर्लोकः विशुद्धश्च भुवस्तथा ॥ सुरलोकः सहस्रारो गायत्र्याः स्थाननिर्णयम् ॥ इति गायत्रीतन्त्रे द्वितीयब्राह्मणपटले ॥ १ ॥ पुनर्गोपथब्राह्मणे ॥ ऋग्वेदस्य पृथिवीस्थानमन्तरिक्षस्थानं अध्वरः [यजुः] द्यौस्थानसामवेदस्येति ॥ पू० ५।२५ ॥ २ ॥ पुनर्यजुर्वेदे ॥ तिस्रस्त्रेधा सरस्वत्यश्विना भारतीड़ा ॥ अध्या० २० मं० ६३ ॥ तत्र भाष्यम् ॥ सरस्वती मध्यस्थाना भारती द्युस्थाना इड़ा पृथिवीस्थानेति महीधरभाष्ये ॥ ३ ॥ पुनर्गायत्रीतन्त्रे प्रथमब्राह्मणपटले गायत्रीशब्दनिर्णये ॥ मूलादिब्रह्मरन्ध्रान्तं गीयते मननाद् यतः ॥ मननात्त्राति षट्चक्रं गायत्री तेन कीर्त्तिता ॥ ४ ॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ हिमकुन्देन्दुधवलां बालां शक्तिं महोज्ज्वलाम् ॥ कालीकालकलानन्दां मूले [मूलाधारे] ध्यात्वा भवेद्वशी ॥ पट० २१।२१ ॥ (प्रश्नः) तत्रास्मिन् स्थाने ध्यानस्य किं प्रयोजनम् ?॥ (उत्तरम्) अणिमाद्यष्टसिद्धीनां प्राप्तिर्वा षट्कर्म(१)-प्रयोगाणां सिद्धिरेव प्रयोजनम् ॥ तत्र प्रमाणम् ॥ भुवनज्ञानं सूर्य्ये [सहस्रपद्मे] संयमात् ॥ इति यो सू० पा० ३ । सू० २६ । पुनस्तत्रैव । नाभिचक्रे [संयमात्] कायव्यूहज्ञानम् ॥ पा० ३ सू० २८ ॥ हृदये चित्तसंवित् ॥ पा० ३।३२ ॥ १ ॥ पुनः शिवसंहिता-

---

(१) षट्कर्म्मेति—अथ षट्कर्माण्याह ॥ अथाभिधास्ये तन्त्रेऽस्मिन् सम्यक् षट्कर्म-लक्षणम् ॥ सर्वतन्त्रानुसारेण प्रयोगफल सिद्धिदम् ॥ शान्ति(१)वश्य (२)स्तम्भनानि (३) विद्वेषो(४) उच्चाटनं तथा ॥ (५) मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः ॥ इत्युड्डीश-तन्त्रे षट्कर्मप्रयोगलक्षणे पट० २१ ॥

याम् ॥ यः करोति सदा ध्यानं मूलाधारे विचक्षणः ॥ तस्य स्या-
द्दादुरीसिद्धिर्भूमित्यागक्रमेण वै ॥ वपुषः कान्तिरुत्कृष्टा जठरा-
ग्निविवर्द्धनम् ॥ आरोग्यञ्च पटुत्वञ्च सर्वज्ञत्वञ्च जायते ॥ भूता-
र्थञ्च भविष्यञ्च वेत्ति सर्वं सकारणम् ॥ अश्रुतान्यपि शास्त्राणि
सरहस्यं वदे ध्रुवम् ॥ वक्त्रे सरस्वती देवी सदा नृत्यति निर्भरम् ॥
मन्त्रसिद्धिर्भवेत्तस्य जपादेव न संशयः ॥ जरामरणदुःखौघाना-
शयेति गुरो(१)र्वचः ॥ इदं ध्यानं सदा कार्य्यं पवनाभ्यासिना
[प्राणायामकारकाणाम् ब्राह्मणक्षत्रियवैश्यानाम्]-परम् ॥ ध्यान-
मात्रेण योगीन्द्रो मुच्यते सर्वकिल्बिषात् ॥ पट० ५।९१+९६ ॥
पुनस्तत्रैव ॥ ध्यानं करोति यो नित्यं स योगीश्वरपण्डितः ॥
किन्त्वस्य योगिनोऽन्यत्र विशुद्धाख्ये सरोरुहे ॥ चतुर्वेदा विभासन्ते
सरहस्या निधेरिव ॥ इहस्थाने स्थितो योगी यदा क्रोधवशो भवेत् ॥
तदा समस्तं त्रैलोक्यं कम्पते नात्र संशयः ॥ इह स्थाने मनो यस्य
दैवात् याति लयं यदा ॥ तदा बाह्यं परित्यज्य स्वान्तरे रमते
ध्रुवम् ॥ तस्य न क्षतिमायाति स्वशरीरस्य शक्तितः ॥ संवत्सर-
सहस्रेऽपि वज्रातिकठिनस्य वै ॥ यदा त्यजति तद्ध्यानं योगी-
न्द्रो वह्निमण्डले ॥ तदा वर्षसहस्राणि मन्यते तत्क्षणं कृतिः ॥
पट० ५।१२४ ॥ पुनस्तत्रैव ॥ स्थानस्यास्य ज्ञानमात्रेण नृणां संसा-
रेऽस्मिन् सम्भवो नैव भूयः ॥ भूतग्रामं सन्तताभ्यासयोगात् क-
र्त्तुं हर्त्तुं स्याच्च शक्तिः समग्रा ॥ स्थाने परे हंसनिवासभूते कैला-
सनाम्नीह निविष्टचेताः ॥ योगी हतव्याधिरधःकृताधिर्वायुश्चिर-
ञ्जीवति मृत्युमुक्तः ॥ पट० ५।१९७+१९८ ॥ २ ॥ पुनारुद्रयाम-

(१) गुरोर्वच इति—गुरोर्वचः शायत्री वाक्यमित्यर्थः ॥

लोत्तरतन्त्रे ॥ ज्ञात्वा षट्चक्रभेदञ्च यः कर्म्म [षट्कर्म्म] कुरुते-ऽनिशम् ॥ संवत्सराद्भवेत्सिद्धिरिति तन्त्रार्थनिर्णयः ॥ पट० २१। १५ ॥ ३ ॥ पुनस्तोड़लतन्त्रे ॥ भूमिकामो जपन्मन्त्रं मूलाधारे चतुष्टके ॥ विशुद्धाख्ये जपादेव विष्णुलोके वसेद् ध्रुवम् ॥ सहस्रारे स्थिरीभूयाद् यदि चाष्टशतं जपेत् ॥ तत्फलात् कोटिभागैकं भागं चान्ये न विद्यते ॥ उल्ला० ९ ॥ ४ ॥ पुनर्गायत्रीतन्त्रे तृतीयब्राह्मणपटले ॥ प्रातःकाले जपेन्मन्त्रं यत्नतः सूर्य्यमण्डले ॥ मध्याह्ने प्रजपेद्देवीम् यत्नतो वह्निमण्डले ॥ सायाह्ने प्रजपेद्देवीं यत्नतश्चन्द्रमण्डले ॥ ७ ॥ तेनात्र भूर्भुवःस्वःशब्देन षट्चक्रान्तर्गतमूलाधारविशुद्धसहस्रारपद्मादीनि गायत्र्याः स्थानानीति सिद्धम् ॥ अथ कस्माद्गायत्र्यास्त्रय्येव ध्यानानि भवन्तीत्याह ॥ धामानि त्रयाणि भवन्ति स्थानानि जन्मानीति ॥ निरु० दै० खं० ३।२७ ॥ (यः) यद्गायत्र्याः स्वरूपम् तेजः (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितः षट्चक्रान्तर्गतध्यानस्थानवर्णनं दशमप्रकरणम् ।

---

अथ एकादशार्थमाह ॥

अन्वयः ॥ तत्सवितुर्देवस्य भूर्भुवःस्वर्वरेण्यम् भर्गो ओम् धीमहि यो नो धियः प्रचोदयात् ॥११॥

पदार्थः ॥ (तत्) तस्य (सवितुः) अन्तर्य्यामिनः

प्रेरकस्य वा [ तेन विष्णोः शिवस्य, रामस्य, कृष्णस्ये-न्द्रस्य वा] [कथम्भूतस्य शिवस्य?] (देवस्य) प्रकाशमानस्य वा साकारस्वरूपधारिणः (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यैः (वरेण्यम्) वरणीयम् उपासनीयम् वा (भर्गः) स्वरूपम् ( ओम् ) गायत्रीम्, शक्तिम् प्रकृतिम् वा ( धीमहि ) ध्यायेम (यः) शिवरूपम् (नः) अस्माकम् (धियः) बुद्धीः कर्म्म च (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥ ११ ॥

भाष्यम् ॥ ( तत् ) तस्य व्यत्ययेन द्वितीयार्थे षष्ठी (सवितुः) अन्तर्यामिनः प्रेरकस्य वा [तेन विष्णोः शिवस्य, रामस्य, कृष्णस्येन्द्रस्य वा] ॥ "तत्रास्मिन् स्थाने रामकृष्णादयः ब्रह्मवाचिकशब्दानां निराकारावस्थायां ऐक्यता निरूप्यते ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ॥ तदेव शुक्रं तद्ब्रह्मता आपः स प्रजापतिः ॥ यजु॰ अध्या॰ ३२। म॰ १॥१॥ पुन ऋग्वेदे ॥ इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गुरुत्मान् ॥ एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ १।१६।४।४६ ॥ पुनस्तत्रैव ॥ त्वमग्ने इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्य ॥ त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते त्वंविधर्त्तः सचसे पुरन्ध्या ॥ २।५।१८।२।१।१।३ ॥२॥ पुनः सामवेदे ॥ एष ब्रह्मा य ऋत्विज इन्द्रो नाम श्रुतो गृणे ॥ २०।८।१।२।१ ॥ पुनस्तत्रैव ॥ त्वां विष्णु बृहन् क्षयो मित्रो गृणाति वरुणः ॥ १७।८।१।११।३ ॥३॥ पुनरथर्ववेदे ॥ स एत सविता स्वर्दिवस्पृष्टेऽवचाकशत ॥१॥ सोऽर्य्यमा स वरुणः स रुद्रः स महादेवः ॥२॥ सो अग्निः स उ सूर्यः स उ एव

महायमः ॥३॥ १३।३।४ ॥४॥ पुनर्य्यास्केनाऽप्युक्तम् ॥ महान्तमात्मानमेषर्गण प्रवदन्तीन्द्रं मित्रवरुणमग्निमाहुरिति ॥ निरु० परि० २।१ ॥५॥ पुनर्ब्रह्मोपनिषदि ॥ स आदित्यश्च विष्णुश्चेश्वरश्च स पुरुषः स प्राणः स जीवः सोऽग्निः सेश्वरश्चेति ॥६॥ पुनः कैवल्योपनिषदि ॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥ स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥८॥६॥ पुनर्नारायणोपनिषदि ॥ तदेवाऽग्निस्तद्वायुस्तत्सूर्य्यस्तदु चन्द्रमाः ॥ तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥२॥ पुनस्तत्रैव ॥ स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥२।१२॥ ७॥ पुनर्मैत्रायणोपनिषदि ॥ त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ॥ त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥ त्वं मनुस्त्वं यमश्च त्वं पृथिवी त्वमथाच्युत ॥ प्रपा० ४।०२॥ पुनस्तत्रैव ॥ एष हि खल्वात्मेशानः शम्भुर्भवो रुद्रप्रजापतिर्विश्वसृक्हिरण्यगर्भः सत्यं प्राणो हंसः शास्ता विष्णुर्नारायणोऽर्कः सविता धाता-सम्राडिन्द्र इन्दुरिति ॥८॥ पुनर्नृसिंहपूर्वतापिन्युपनिषदि ॥ स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥ उप० १।४॥९॥ पुनः शाण्डिल्योपनिषदि ॥ योऽसौ देवो भगवान् सर्वैश्वर्य्यसम्पन्नस्सर्वव्यापी सर्वभूतानां हृदये सन्निविष्टो मायावी मायया क्रीड़ति, स ब्रह्मा स विष्णुस्स रुद्रस्सेन्द्रः ॥ अध्या० ६॥१०॥ पुनर्म्महोपनिषदि ॥ स ब्रह्मा स ईशानस्सेन्द्रस्सोऽक्षरः परमः स्वराडिति ॥ अध्या० १॥११॥ पुनरेकाक्षरोपनिषदि ॥ मित्रस्सुपर्णश्चन्द्र इन्द्रो वरुणोरुद्रस्त्वष्टा विष्णुस्सविता गोपतिस्त्वम् ॥ १२ ॥ ॥ १२ ॥ पुनर्निरालम्बोपनिषदि । ब्रह्मैव परमात्मा स ब्रह्मा स विष्णुस्सेन्द्रस्सशमनः स सूर्य्यः स चन्द्रइति ॥ १३ ॥ पुनारामोप-

निषदि ॥ राम एव परब्रह्म राम एव परं तपः ॥ राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम् ॥ १३ ॥ पुनारामोत्तरतापिन्युपनिषदि ॥ रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ॥ इति रामपदेनाऽसौ परब्रह्माऽभिधीयते ॥ उप० १।६ ॥ १४ ॥ पुनः कृष्णोपनिषदि ॥ कृष्णो ब्रह्मैव शाश्वतम् ॥ १२ ॥ १५ ॥ पुनर्म्मानवधर्म्मशास्त्रे ॥ एतमेते वदन्त्यग्निं मनुमन्यप्रजापतिम् ॥ इन्द्रमेके परे प्राणमपरे ब्रह्मशाश्वतम् ॥ अध्या० १२।१२३ ॥ १६ ॥ पुनः शङ्खसंहितायाम् ॥ एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः ॥ एष धाता विधाता च पुराणो निष्कलः शिवः ॥ अध्या० ७।२१ ॥१७॥ पुनर्म्महानिर्वाणतन्त्रे ॥ केचिद्वदन्ति स ब्रह्मा केचिद्विष्णुः प्रकथ्यते ॥ केचिद्रुद्रो महापूर्वं एको देवः निरञ्जनः ॥ पट० १० ॥ १८ ॥ पुनाराधातन्त्रे ॥ वासुदेवो महाविष्णुर्भगवान् प्रकृतिः स्वयम् ॥ पट० १७॥ १९ ॥ पुनर्गायत्रीतन्त्रे तृतीयब्राह्मणपटले ॥ स ब्रह्मा स शिवः सूर्य्यः स चाग्निः स च चन्द्रमाः ॥ स एव विष्णुः स गुरुरन्तरात्मा स उच्यते ॥ पुनस्तत्रैव पञ्चमब्राह्मणपटले ॥ यः शिवः कृष्ण एवात्मा यः कृष्णः शिव एव सः ॥ २० ॥ पुनर्गन्धर्वतन्त्रे ॥ शक्तिर्म्माहेश्वरी ब्रह्म त्रयस्तुल्यार्थवाचकाः ॥ स्त्रीपुंनपुंसको भेदः शब्दतो न परार्थतः ॥ पट० ३४ ॥ २१ ॥ पुनर्निर्वाणतन्त्रे ॥ महाकाली हि परमात्मा चणकाकाररूपिणी ॥ माययाच्छादितात्मानं तन्मध्ये समभागतः ॥ महारुद्रः स एवात्मा महाविष्णुः स एव हि ॥ महाब्रह्मा स एवात्मा नाममात्रविभेदकः ॥ एकमूर्त्तिस्त्रयं नाम ब्रह्मा विष्णुर्महेश्वरः ॥ नानाभावो मतो यस्य तस्य मोक्षो न विद्यते ॥ पट० १० ॥ २२ ॥ पुनरह्वनीलतन्त्रे ॥ वासुदेवो हरो ब्रह्मा तारिणी प्रकृतिः सदा ॥ एकमूर्त्तिः सदा चिन्त्या

एकमूर्त्तिः सदा स्थिता ॥ पट० ५ ॥ २३ ॥ पुनर्म्महाभारतान्तर्गत द्रोणपर्वणि ॥ स वै रुद्रः स च शिवः सोऽग्निः सर्वः स सर्ववित् ॥ स चन्द्रश्चैव वायुश्च सोऽश्विनौ स च विद्युतः ॥ स भवः स च पर्ज्जन्यो महादेवः स चानघः ॥ स चन्द्रमाः स चेशानः स सूर्य्यो वरुणश्च सः ॥ अध्या० ९९।१०० ॥ पुनस्तत्रैव सभापर्वणि ॥ त्वामिन्द्रमाहुस्त्वं विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ॥ त्वमग्निस्त्वं मनः सूक्ष्मं प्रभुस्त्वं ब्रह्मशाश्वतम् ॥ अध्या० ३।६१ ॥ पुनस्तत्रैव शान्तिपर्वणि इन्द्रं प्रति वशिष्ठवाक्यम् ॥ एष ब्रह्मा च विष्णुश्च शिवश्चैव जगत्पतिः ॥ सोमश्च भगवान् देवः सर्वे चैव महर्षयः ॥ अध्या० २८०।२३ ॥ पुनस्तत्रैवानुशासनपर्वणि युधिष्ठिरं प्रति वासुदेववाक्यम् ॥ स वै रुद्रः स च शिवः सोऽग्निः सर्वः स सर्वजित् ॥ स वै चन्द्रश्च वायुश्च सोऽश्विनौ स च विद्युतः ॥ स चन्द्रमा स चेशानः स सूर्य्यो वरुणश्च सः ॥ अध्या० १६०।३९+४० ॥ पुनस्तत्रैव गङ्गाम् प्रति वशिष्टवाक्यम् ॥ एष ब्रह्मा शिवो रुद्रो वरुणोऽग्निः प्रजापतिः ॥ कीर्त्यते भगवान् देवः सर्वभूतपतिः शिवः ॥ अध्या० ८५।९५॥२४॥ पुनर्वाल्मीकीयरामायणे उत्तरकाण्डे ॥ अहश्च रात्रिश्च उभे च सन्ध्ये दिवाकरश्चैव यमश्च सोमः ॥ स एव कालो ह्यनिलोऽनलश्च स ब्रह्मरुद्रेन्दु स एव चापः ॥ स० ४५।८ ॥ २५ ॥ पुनः कपिलगीतायाम् ॥ स ब्रह्मा स शिवो विष्णुः सोऽक्षरः परमः स्वराट् ॥ अध्या० ५।१०६ ॥२६॥ पुनर्देवीभागवतान्तर्गतभगवतीगीतायाम् हिमाचलम् प्रति जगदम्बावाक्यम् ॥ ईश्वरोऽहं च सूत्रात्मा विराडात्माहमस्मि च ॥ ब्रह्माहम् विष्णुरुद्रौ च गौरी ब्राह्मी च वैष्णवी ॥ अध्या० ३।१३॥२७॥ तेनात्र निराकारावस्थायां सर्वमैक्यमिति ज्ञात्वा

सवितृशब्देन शिव(१)इति गृह्यते ॥ [कथम्भूतस्य शिवस्य?] (देवस्य) प्रकाशमानस्य, वा साकारस्वरूपधारिणः ॥ तत्र प्रमाणम् ॥ नैनद्देवा आप्नुवन् पूर्वमर्षत् ॥ यजु० अध्या० ४० ॥ मं० ४ ॥ तत्र भाष्यम् ॥ देवा द्योतनात्मकानि चक्षुरादीन्द्रियाणीति महीधरभाष्ये ॥१॥ पुनर्गोपथब्राह्मणे ॥ यत्पञ्चदेवता अभ्युत्तस्थुः, तस्मात्पञ्चदेवता उक्थे शस्यन्ते । या वाक् सोऽग्निः, यः प्राणः स वरुणः, यन्मनः स चन्द्रः, यच्चक्षुः स बृहस्पतिः, यच्छ्रोत्रं स विष्णुः । एते ह वा एतान् पञ्चभिः प्राणैः समार्योत्थापयन् ॥ तस्मादुह एवैताः पञ्चदेवता उक्थे शस्यन्ते ॥ उत्तरार्द्धे ४।१॥१२॥ पुनर्यास्कोऽप्याह ॥ इन्द्रियाण्यत्र देवा उच्यन्ते ॥ निरु० परि०१।१२॥३॥ पुनर्ब्रह्मणोक्तगायत्रीमन्त्रभाष्ये ॥ देवस्येतीन्द्रियो वै देव इति ॥४॥ तेनात्र देवशब्देन इन्द्रियादि वर्त्तन्ते यस्मिन् सः साकारस्वरूप इति गृह्यते ॥ (प्रश्नः) कस्माद्देव इत्युच्यते? ॥ (उत्तरम्) यो देवाः स देवताः ॥ निरु० दै०। १।१५ ॥ तेन-देहमास्थाय भक्तानां वरदानाच्च पार्वति! ॥ तापत्रयादिशमनाद्देवता परिकीर्त्तितः ॥ इति कुलार्णवतन्त्रे सप्तदशोल्लासे ॥ तत्र शिवस्य साकारता निरूप्यते ॥ एको देवो बहुधा निविष्टं अजायमानो बहुधा विजायते ॥ इति सुबालोपनिषदि ॥१॥ पुनर्योगशिखोपनिषदि ॥ स्थूलं सूक्ष्मं परं चेति त्रिविधं ब्रह्मणो वपुः ॥ अध्या० २।१४॥२॥ पुनर्नारदपरिव्राजकोपनिषदि ॥ तदेवात्मानमित्येतद्ब्रह्मशब्देन वर्णितम् ॥ तदेकममृतमजरमनुभूय तथोमिति॥ सशरीरं समारोप्य तन्मयत्वं यथोमिति ॥ त्रिशरीरं तमात्मानं परं ब्रह्म विनिश्चिनु ॥ उप०

(१) शिव इति निराकारावस्थायाम् सवितृशब्दः केवलशिवस्यैकबोधको न त्वन्येषाम् ॥ तत्र वेदसाराख्य शिवसहस्रनाम्नि ॥ नमो निस्तुलरूपाय सवित्रे तपसे नमः ॥

८।४+५ ॥३॥ पुनः शाण्डिल्योपनिषदि ॥ अथाऽव्ययस्याऽरूपस्य ब्रह्मणस्त्रीणि रूपाणि भवन्ति, निष्कलं सकलं सकलनिष्कलञ्चेति ॥ अध्या० ३।१।४॥ पुनर्मैत्रायणोपनिषदि ॥ द्वेवावब्रह्मणो रूपं मूर्त्तं चाऽमूर्त्तमिति॥ प्रपा०५।३॥५॥ पुनर्बृहदारण्योपनिषदि। स वा अयमात्मा ब्रह्मविज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमय इत्यादि० ॥ अध्या० २ ब्रा० ३।५॥६॥ पुनर्मानवधर्मशास्त्रे ॥ ततः स्वयम्भुर्भगवानव्यक्तो व्यञ्जयन्निदम् ॥ महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ॥ अध्या० १।६॥ पुनस्तत्रैव ॥ योऽसावतीन्द्रियो ग्राह्यः सूक्ष्मो व्यक्तः सनातनः॥ सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ॥ अध्या० १।७॥७॥ पुनश्चरकसंहितायाम् शारीरस्थाने ॥ अव्यक्ताद्व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ॥ रजस्तमभ्यामाविष्टः चक्रवत् परिवर्त्तते ॥ अध्या० ॥८॥ पुनस्तत्रैव ॥ अनादिपुरुषो नित्यो विपरीतस्तु हेतुजः॥ सदकारणवन्नित्यं दृष्टहेतुजमन्यथा ॥ तदेव भावाद्ग्राह्यं [भवसंसारं तद्रूपेण] नित्यत्वान्न कुतश्च न ॥ भावात् ज्ञेयं तदव्यक्तमचिन्त्यं व्यक्तमन्यथा ॥८॥ तेनात्र शिवस्य साकारस्वरूपतासिद्धम् ॥ (भूर्भुवः स्वः) ब्राह्मणक्षत्रियवैश्यैः ( वरेण्यम् ) वरणीयम् उपासनीयम् वा (भर्गः) तेजःस्वरूपम् (१) ॥ तत्र प्रमाणम् ॥ नमः शिवाय भर्गायेति वेदसाराख्यशिवसहस्रनाम्नि ॥ वीर्यं वै भर्ग इति। श० ब्रा० ५।४।५।१ ॥ इन्द्रियं वै वीर्यमिति॥ ऐत्तरीय० ब्रा० पं० १।१२ ॥ तेनात्र भर्गःशब्देन इन्द्रियादयो वर्त्तन्ते यस्मिन् सज्योतिःस्वरूपो लिङ्गशरीर इति गृह्यते ॥ (प्रश्नः) तत्र किं शरीरम् ? ॥ (उत्तरम्) चेष्टेन्द्रियार्थाश्रयं शरीरम् ॥ गौ० न्या० सू० अध्या० १ । सू० ११ ॥

(१) तेजःस्वरूपमिति—समस्तसिद्धये तेजोमूर्त्तये ते नमो नमः ॥ इति वेदसाराख्य शिवसहस्रनाम्नि ॥

१ ॥ पुनर्वैशेषिकसूत्रे ॥ चेष्टेन्द्रियार्थाश्रयं शरीरम् ॥ अध्या०
४ । सू० १ ॥ २ ॥ पुनश्चरकसंहितायां शारीरस्थाने ॥ तत्र शरीरं
नाम चेतनाधिष्ठानभूतविकारसमुदायात्मकं समयोगि वा ॥
अध्या० ६ ॥ ३ ॥ (प्रश्नः) तत् किम् ? ॥ ( उत्तरम् ) सप्तदशैक-
लिङ्गम् ॥ इति सांख्यसूत्रे ॥ अध्या० ३ सू० ९ ॥ तत्र भाष्यम् ॥
तत्र सप्तदश मिलित्वा लिङ्गशरीरं तच्च सर्गादौ समष्टिरूपमेकमेव
भवतीत्यर्थः ॥ एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सांख्य-
प्रवचनभाष्ये ॥ (प्रश्नः) तत्र शिवादिशब्दवाचिनो ब्रह्मणः लिङ्ग-
शरीरं किम्? । (उत्तरम्) ओम्-तेन (ओम्) गायत्रीम्, शक्तिम् प्रक-
तिम् वा ॥ अथ शक्तिरेव परब्रह्मणस्साकारस्वरूपेति स्पष्टीक्रियते ॥
याते रुद्रशिवातनूरघोरा पापकाशिनी ॥ तयानस्तन्वाशन्तमया
गिरिशन्ताभिचाकशीहि ॥ यजु० अध्या० १६ मं० २ ॥ [तत्र भा-
ष्यम् ॥ हे (रुद्र) शिव (१) (या) शक्तिरूपा (ते) तव (तनुः) शरी-
रम्, हे (गिरिशन्त) शिव, तया तन्वानोऽस्मानभिचाकशीहि
अभिपश्य ॥ चाकशीति पश्यतिकर्म्मा निघ० ७ । ११।८ ॥ की-
दृशी तनुः ? (शिवा) सती शुभे न युक्ता शक्ता गायत्रीस्वरूपा ॥
तत्र प्रमाणम् ॥ नमामः पावनां शिवामिति देव्याथर्वशीर्षे ॥ १ ॥

---

(१) (प्रश्नः) कस्माद्रुद्रः शिव इत्युच्यते ? ॥ (उत्तरम्) यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूप-
मुपलभ्यते तस्मादुच्यते रुद्र इति शिवाथर्वशीर्षे ॥ २ ॥ पुनर्ब्राह्मणे रतान्तर्गतद्रोणपर्वणि ॥
यन्निर्दहति तीक्ष्णो यदुग्रो यत् प्रतापवान् ॥ मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ अ०
२०३।१४० ॥ पुनस्तत्रैवानुशासनपर्वणि ॥ अ० १६१।७ ॥ समेधयति यन्नित्यं सर्वान् वै सर्व-
कर्मभिः ॥ मनुष्याञ्छिवमन्विच्छं तस्मादेव शिवः स्मृतः ॥ अ० १६१।१० ॥ पुनर्द्रोणपर्वणि ॥
समेधयति यन्नित्यं सर्वार्थान् सर्वकर्मसु ॥ शिवमिच्छन् मनुष्याणां तस्मादेव शिवः स्मृतः ॥
अ० २०३।१२९ ॥

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ॥ इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश ॥ ऋग्वेदे ॥ ४।७।३४।६।४।४७।१८ ॥ २ ॥ द्वावयवावित्यष्टावयवः प्रजापतिगायत्रीरूपः परिकल्पितः तथा चाष्टसंख्योपेतत्वात् सर्वछन्दः प्रकृतिभूतगायत्रीछन्दो भूत्वा वयसा तृतीया लुक् वयोऽवस्थया वक्ष्यमाणात् पञ्चदशपशूं प्रजापतिग्रहणात् ॥ तानि वा एतानि चत्वारि वयांसि चत्वारि छन्दांसि तदाष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान् पशून् वयसाप्नोदिति श्रुतिः ८।२।३।१४ ॥ विशालं द्विपदा गायत्रीरूपं छन्दो भूत्वा [ छादनाच्छन्देति निरु० ] हविर्विवेचनसमर्थमेव जग्राहेति महीधरभाष्ये ॥ यजु० अ० १४।९ ॥ ३ ॥ पुनर्गोपथब्राह्मणे ॥ अहमिदं सर्वं जनयिष्यामि यदिदं किञ्चेति तस्माज्जायाऽभवत् ॥ पू० । १।२ ॥ ४ ॥ पुनर्श्रृङ्गीशतन्त्रे ॥ यः शिवः सा तु गायत्री, गायत्री या शिवस्तु सः ॥ मूढा एवं न जानन्ति ह्यज्ञानतमसावृताः ॥ सकलेनैव रूपेण गायत्री शिव उच्यते ॥ निष्कलेनैव भावेन गायत्री कथ्यते शिवः ॥ ५ ॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ जगतां जगदीशानां नारीरूपेण संस्थितः ॥ अहं नारी न सन्देहः सुन्दरी कुत्सिता परा ॥ सुन्दरी पालनार्थाय विनाशाय सुकुत्सिता॥ पट० २८।५८ ॥ ६ ॥ पुनः श्वेताश्वतरोपनिषदि ॥ एको वर्णो बहुधा शक्तियोगात् [साकारस्वरूपात्] वर्णाननेकान् [गायत्री, सावित्री, सरस्वत्यादिरूपाणि] निहता दधातीति ॥ ४।१ ॥ ७ ॥ पुनर्योगशास्त्रान्तर्गतशिवसंहितायाम् ॥ उमा सहायो भगवान् सगुणः परिकीर्त्तितः ॥ पट० १।२१९ ॥ ८ ॥ पुनस्सर्वदर्शनसंग्रहान्तर्गतशैवदर्शने ॥ परमेश्वरस्य हि मलकर्म्मादिपाशजालसम्भवेन प्रा-

क्षतं शरीरं न भवति किन्तु शाक्तं शक्तिरूपैः ॥ ९ ॥ पुनश्चरक-कल्पतरौ ॥ सा शक्तिः प्रथमलोहितशुक्लकृष्णवदाभाषा गायत्री-नामदेवतापरसूक्ष्मध्वनिलक्षणवाग्देवतारूपेण [ सरस्वतीरूपेण ] विवर्त्तिता बभूव सा सर्गकाले परब्रह्म, सा पुनः स्वयं शान्तिविद्याप्रतिष्ठानिवृत्तिचतस्रः शक्तयो भूत्वा परमव्योमरूपः परमात्मा शिवो बभूवेति ॥ चरकसंहिता भाष्य० सूत्रस्थाने ॥१०॥ पुनर्गन्धर्वतन्त्रे ॥ सच्चित् सुखमयः शम्भुस्त्रिरूपः सर्वकर्मणि ॥ पट० २२ ॥ पुनर्देवीपुराणे शिवं प्रति ब्रह्मादिदेववाक्यम् ॥ त्वं गायत्री सदा देवी वेदमाता स्वयम्भुवा ॥ महाज्ञानपरा नित्यं ज्ञानगम्य नमोऽस्तु ते ॥ अध्या० ८३ ॥ तेनात्र शिवाशब्देन गायत्र्येव स्त्रियः स्वरूपेण ब्रह्मणस्साकारः स्वरूपमिति गृह्यते ॥ (प्रश्नः) कस्माद्गायत्री शिव इत्युच्यते ? ॥ (उत्तरम्) ईशित्वञ्च शिवः शक्तिर्मङ्गलान्ते भवेद्यदि ॥ शिवेति कथ्यते नाम मुनिभिस्तत्त्वको-विदैः ॥ गायत्रीतन्त्रे पट० २ ॥ १ ॥ पुनर्देवीपुराणे॥ शिवा मुक्तिः समाख्याता योगिनां मोक्षगामिनी ॥ शिवाय योजयेद्देवी शिवा-लोके ततः स्मृतेति॥ अध्या० ३७॥२॥ यतः अघोरा [शान्तस्वरूपा] अविषमा सौम्या[प्रकृतिस्वरूपा] अतएवापापकाशिनी पापमसुखं काशयति प्रकाशयति पापकाशिनी न पापकाशिनी अपापकाशिनी या पुण्यफलमेव ददाति न पापफलमित्यर्थः (गिरिशन्तः) गिरौ शेते गिरिशः अमतिगच्छति जानातीत्यन्तः सर्वज्ञः अमगतौ भ-जने शब्दे कर्त्तरि क्तः गिरिशश्चासावन्तश्च गिरिशन्तस्तस्बुद्धिः श-कन्ध्वादित्वात् पररूपम् ॥ पा० ६।१।९४ ॥] तत्र प्रकृतिस्वरूपा गायत्र्येव ब्रह्मणस्साकारस्वरूपेति स्पष्टीक्रियते॥ अत ऊर्द्ध्वं प्रकृति-पुरुषयोः साधर्म्यवैधर्म्यं व्याख्यास्यामः ॥ तद्यथा, उभावप्यनादी

उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ, उभावप्यपरौ उभौ च सर्वगताविति॥ सुश्रुतशारीरस्थाने अ० १।५॥१॥ पुनः सांख्यसूत्रे॥ प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम्॥ अध्या० ५ सू० ७२॥२॥ पुनश्चरकसंहितायाम्॥ द्विविधमेव खलु सर्वं सच्चासच्च तस्य चतुर्विधा परीक्षा॥ सूत्रस्थाने अध्या० ११॥ तत्र भाष्यम्॥ द्विविधमित्यादि, सर्वमिति प्राङ्महानिर्वाणप्रलयाद्यदासीच्छक्तिरेव परं ब्रह्म, तदाश्रे तदन्नं निखिलं द्विविधमेव प्रतीयमानं भवति॥ कथमिति तदाह। सच्चासच्चेति॥ अस्तीति सद्वस्तुपरोक्षमपरोक्षञ्च॥ तत्रापरोक्षमलौकिकं वस्तुशक्तिब्रह्मसदैवतः, तत्रो लोहितमिव तेजः, शुक्ल इवापः कृष्णमिवान्नं, तल्लोहितशुक्लकृष्णवदाभासते योऽन्तापाहिता सा शक्तिः परमसूक्ष्माध्वन्यवरुद्धा लोहितशुक्लकृष्णवदाभासा गायत्री भगवती दुर्गा (१) सा पुनर्विद्या शान्तिः प्रतिष्ठा निवृत्तिरिति चतस्रः शक्तयो भूत्वैकीभूय परव्योमरूपः परमात्मा शिवो बभूव॥ तस्य ज्योतिरूपा सा गायत्री तेजोवनाशे न तस्यैव ज्ञानशक्त्याध्यवसितं यदिच्छाशक्त्या परिणमन्ती विद्या विद्या भूत्वा विद्याश्रयं[विद्या गायत्री तदेव साकारस्वरूपो यस्य, तन्नामम् विद्याश्रयेति बोद्धव्यम्] सदाशिवम्, विद्याश्रयाश्चतुरो वादान् सूते ते नियति नाम तच्छक्त्याश्चेतदन्नं सर्वमपरोक्षं प्रमाणगम्यत्वात्॥ इति चरककल्पतरौ॥ २॥ पुनर्गर्गे-

---

(१) दुर्गेति—सत्त्वाद्भाववती दुर्गेत्युच्यते॥ स्मरणादि भये दुर्गे तारिता रिपुसङ्कटे॥ देवाः शक्रादयो यस्मात् तेन दुर्गा प्रकीर्त्तिता॥ इति देवीपुराणे शक्रं प्रति ब्रह्मणो वाक्यम् अध्या० ३७॥ १॥ पुनर्देव्याथर्वशीर्षे॥ यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्त्तितेति॥ तेन गायत्र्येव दुर्गेत्यर्थः॥

शाथर्वशीर्षे ॥ त्वं शक्तित्रयात्मकः (१) त्वां योगिनो ध्यायन्ति नित्यम् ॥ ४ ॥ पुनर्देव्याथर्वशीर्षे ॥ सैषा ब्रह्मविष्णुरुद्ररूपिणी सैषा प्रजापतीन्द्रमनवः ॥ ५ ॥ पुनाराधातन्त्रे ॥ हरि(२)र्हि निर्गुणः साक्षात् वरे वरहितप्रिये ॥ शरीरं हि महेशानि ! प्रकृतिः परमेश्वरि ! ॥ पट० ६ ॥ ६ ॥ कामधेनुतन्त्रे ॥ हरिर्हि निर्गुणः साक्षात् सगुणा परकुण्डली [गायत्री] ॥ तस्मात्तु युवतीदेहात् हरेर्व्यक्तिरेव च ॥ पट० ८ ॥ ७ ॥ पुनर्ब्रह्मनीलतन्त्रे ॥ निर्गुणं यत्परं ब्रह्म ज्योती(३) रूपं नमस्करो ॥ साकार यदि जायेत सर्वदेहेषु देवता ॥ रूपत्रयं [गायत्री, सावित्री, सरस्वती] सदा भूत्वा देहिनां देहभेदतः ॥ तत्र तेषां विशेषार्थं नरदेहे वरानने ! ॥ शक्तिः शिवश्च विज्ञेयो मम सङ्केतमुत्तमम् ॥ पट० ८ ॥ पुनस्तत्रैव ॥ वासुदेवो हरो ब्रह्मा तारिणी प्रकृतिः सदा ॥ एकमूर्त्तिः सदा चिन्त्यः एकमूर्त्तिः सदा स्थिता ॥ पट० ५ ॥ पुनस्तत्रैव ॥ शक्तिर्हि ब्रह्मणो रूपं शक्तिरूपं वरानने ! ॥ शक्तिं विना महेशानि ! नास्ति किञ्चिन्मम प्रिये ! ॥ शक्तिं विना महेशानि ! नास्ति

---

(१) त्वं शक्तित्रयात्मक इति—अस्मिन् स्थाने आत्माशब्दशरीरवाचकः, तेन हे गणेश ! परं ब्रह्म त्वं शक्तित्रयात्मको गायत्री सावित्री सरस्वती स्वरूपोऽसीत्यर्थः ॥

(२) हरिर्हि निर्गुण इति—हरिशब्देन परब्रह्मेति गृह्यते ॥ तस्य रामस्य साकारस्वरूपं प्रकृतिः सीतेति स्पष्टीक्रियते ॥ देवा ह वै प्रजापतिमब्रुवन् का सीता किं रूपमिति ॥ सहोवाच प्रजापतिः सा सीतेति । मूलप्रकृति[गायत्री]रूपत्वात्सा सीता प्रकृतिः स्मृता ॥ पुनः ॥ प्रणवप्रकृतिरूपत्वात् सा सीता प्रकृतिरित्युच्यते ॥ सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता ॥ प्रणवत्वात् [प्रणवस्वरूपत्वात्] प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ सा देवी त्रिविधा भवति शक्त्यात्मना, इच्छाशक्तिः क्रियाशक्तिः साक्षाच्छक्ति [ज्ञानशक्तिरिति भाष्ये]रिति ॥ सीतोपनिषदि ॥ तेन परब्रह्मणः रामस्य साकारस्वरूपा सीतेति सिद्धम् ॥

(३) ज्योतिरूपमिति—गायत्र्याः भर्गस्वरूपमीम् ज्योतिस्स्वरूपमित्यर्थः ॥

किञ्चिन्मम प्रिये ! ॥ पट० ८ ॥ ८ ॥ पुनर्नीलतन्त्रे ॥ काली कालीति वक्तव्या तद्रूपा शिवरूपिणी ॥ पट० ७ ॥ ८ ॥ पुनः कङ्कालमालिनीतन्त्रे ॥ तत्र कुण्डलिनीं नित्यां परमानन्दरूपिणीम् ॥ तत्र ध्यानं प्रकुर्वीत सिद्धिकामो वरानने ! ॥ पट० ॥ २ ॥ ८ ॥ पुनाराधातन्त्रे ॥ अक्षरं निर्गुणं ब्रह्म परं ब्रह्मेति गीयते ॥ सगुणं स्यात् सदा ब्रह्म शब्दब्रह्म तदुच्यते ॥ गुणस्तु प्रकृतिर्माया निर्गुणा यदि जायते ॥ तदास्या सगुणं ब्रह्म अन्यथा निश्चलं सदा ॥ निश्चलं हि महेशानि ! कस्य गम्यं कदा भवेत् ॥ गम्येन परमेशानि ! तेन किं भवति प्रिये ! ॥ वेदगम्यं (१) यदा ब्रह्म निर्गुणं सगुणं तदा ॥ वेदगम्यं हि यद्ब्रह्म तदेवं निश्चलं सदा ॥ शब्दब्रह्म परं ब्रह्म ब्रह्मद्वयमिहोच्यते ॥ शब्दब्रह्म विना देवि ! परन्तु शवरूपवत् ॥ तस्मात् शब्दं महेशानि ! मातृकाक्षरसंयुतम् ॥ मातृका परमाराध्या कृष्णास्य जननी परा ॥ पट० १५॥ पुनस्तत्रैव ॥ शरीरं कालिका साक्षाद् वासुदेवस्य (२) नान्यथा ॥ शक्तिं विना

---

(१) वेदगम्यमिति—वेदे च परब्रह्मणस्साकारस्वरूपः तेन साकारस्वरूपेण यद्गम्यं बोद्धव्यम् तद्वेदगम्यमित्यर्थः॥ पुनः कपिलगीतायां गणेशो भास्करो विष्णु रुद्र शक्ती च शाश्वतम्॥ वेदगर्भेषु [वेदस्वरूपेषु] पूज्यन्ते पञ्चायतनदेवता ॥ अध्या० २।२० ॥

(२) वासुदेवेति—वासुदेवस्य परब्रह्मणः शिवस्य विष्णोर्वा ॥ तत्र प्रमाणम् ॥ स एष शाश्वतो देवः सर्वभूतमयः शिवः ॥ वासुदेव इति ख्यातो यन्मां त्वं परिपृच्छसि ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृत लक्षणैः ॥ सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः ॥ इति महाभारतान्तर्गतभीष्मपर्वणि अध्या० ६६।२८+२९ ॥ १ ॥ पुनस्तत्रैव शान्तिपर्वणि ॥ यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ॥ अध्या० ३३९।३९ ॥ पुनः ज्योतिषशास्त्रान्तर्गत सूर्यसिद्धान्ते ॥ वासुदेवः परम् ब्रह्म तन्मूर्त्तिः पुरुषः परः ॥ अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः ॥ भूगोलाध्याये ॥ १२ ॥ तत्र भाष्यम् ॥ वासुदेवो वसत्यस्मिन् जगत् समस्तमस्मीं वा जगति समस्ते वसतीति वसतेऽरुणि वासुः देवनाद्द्योतनाद्देवः वासुश्चासौ देवश्चेति

महेशानि ! परब्रह्म प्रवाकृति ॥ पट० २० ॥ १० ॥ पुनर्गन्धर्व-तन्त्रे ॥ प्रणमामि महादेवीं तुरीयां ब्रह्मरूपिणीम् ॥ पट० २ ॥ पुनस्तत्रैव ॥ श्रीमत्त्रिपुरसुन्दर्य्या(३)श्चिन्तनीया परा कला ॥ सा एव पञ्चमी शक्तिः परब्रह्मस्वरूपिणी ॥ पट० ३ ॥ पुनस्तत्रैव ॥ पुरुषः प्रकृतिश्चैव नित्यौ द्वौ समुपस्थितौ ॥ सगुणाधिबला देवी निर्गुणो निर्बलो पुमान् ॥ पट० ३९ ॥ ११ ॥ पुनारुद्रयामलोत्तर-तन्त्रे ॥ सुरासुरभयप्रदं तरुणरूपशोभाकरं, मनोहरकलेवरं सकल-देहसंज्ञापकम् ॥ भजन्ति मुनयो नृपाः प्रतिदिनं तथेन्द्रादयः, दश-च्छदनिकेतने प्रकृतिदेहमध्यस्थितम् ॥ पट० ५२ । १८ ॥ १२ ॥ पुनाराजयोगान्तर्गतब्रह्मज्ञानतन्त्रे ॥ एकाक्षरं परब्रह्म सर्वरूपी तथा पुमान् ॥ शक्तिरूपे परं देवं व्योमातीतं परं पदम् ॥ पट० ६ ॥ पुनस्तत्रैव ॥ शक्तिरूपं निराकारं सर्वव्यासनिरालयम् ॥ पुनस्तत्रैव ॥ शिवशक्तिरिति ख्याता निर्विकल्पो निरञ्जनः ॥१३॥

---

वासुदेवः ॥ तथा चोक्तम् । सर्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः ॥ अतोऽसौ वासुदेवाख्यो विद्वद्भिः परिगीयते ॥ तत्र वासुदेवस्य शिवाख्यकृष्णस्य साकारस्वरूपम् प्रकृतिः राधिका कालिका वेति स्पष्टीक्रियते ॥ कस्माद्राधिका प्रकृतिः गायत्रीत्युच्यते ॥ रक्तविद्युत्प्रभा देवि ! धत्ते यस्मात् सुधिस्थिते॥ तस्मात्तु राधिका नाम सर्वलोकेषु गीयते॥ इति राधातन्त्रे पट० ७॥ तेन वासुदेवस्य शिवस्येत्यर्थः न तु वासुदेवस्यापत्यं कृष्णाख्यवासुदेवेति बोधव्यम् ॥ कस्मात् ? जीवरूपत्वात् ॥ तत्र प्रमाणम् ॥ यस्तु नारायणो नाम देवदेवः सनातनः ॥ तस्यांशो मानुषे-ष्वासीद्वासुदेवः प्रतापवान् ॥ इति महाभारतान्तर्गत आदिपर्वणि ॥ अध्या० ६७।१४८ ॥ पुनस्तत्रैव सभापर्वणि ॥ दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ॥ चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत् ॥ अध्या० ३५।१० ॥ पुनस्तत्रैवानुशासनपर्वणि युधिष्ठिरं प्रति भीष्म-वाक्यम् ॥ पूर्णं वर्षसहस्रन्तु तप्तवानेष माधवः [प्रश्न:] ॥ प्रसाद्य वरदं देवं चराचरगुरुं शिवम् ॥ युगे युगे तु कृष्णेन तोषितो वै महेश्वरः ॥ भक्त्या परमया चैव प्रीतश्चैव महात्मनः ॥ अध्या० १४।११+१२ ॥

पुनः सर्वदर्शनान्तर्गतपाणिनिदर्शने ॥ विकारोपगमे सत्यं सुवर्ण-कुण्डले यथा ॥ विकारोपगमो यत्र तानाहुः प्रकृतिम् पराम् ॥ ५१ ॥१४॥ पुनः कामाख्यातन्त्रे ॥ या देवी कालिका माता सर्व-विद्या[दशमहाविद्या]स्वरूपिणी ॥ कामाख्या सैव विख्याता सत्यं सत्यं न चान्यथा ॥ सैव ब्रह्मेति जानीयात् संज्ञार्थं दर्शनानि च ॥ पट० ८॥१५॥ पुनर्मातृकाभेदतन्त्रे ॥ ब्रह्मविष्णुस्वरूपा च महारुद्र-स्वरूपिणी ॥ पट० ७ ॥ पुनस्तत्रैव ॥ ब्रह्मविष्णुस्वरूपा च जीव-न्मुक्तिप्रदायिनी ॥ पट० ७ ॥ १६ ॥ पुनर्देवीभागवतान्तर्गतभग-वतीगीतायाम् ॥ इत्यादियोगयुक्तात्मा ध्यायेन्मां ब्रह्मरूपिणीम् ॥ अध्या० ६।१ ॥ १७ ॥ पुनर्भगवद्गीतायाम् ॥ प्रकृतिं पुरुषञ्चैव वि-द्ध्यनादावुभावपि ॥ विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ अध्या० १३।१९ ॥१८॥ तेनात्र शिवस्य वा ब्रह्मणः गायत्र्येव सा-कारस्वरूपमिति सिद्धम् ॥ (धीमहि) ध्यायेम (यः) शिवः ( नः ) अस्माकम् (धियः) बुद्धीः कर्म्म च (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो शिवादिसाकारस्वरूपवर्णनं

एकादशप्रकरणम् ॥ ११ ॥

—०—

अथ द्वादशार्थमाह ॥

तत्र गायत्रीमन्त्रस्यालब्ध्यार्थं निर्दिश्यते ॥

अन्वयः ॥ तद् ओम् धीमहि भूर्भुवःस्वर्वरेण्यम् सवितुर्देवस्य भर्गो यो नो धियः प्रचोदयात् ॥ १२ ॥

पदार्थः ॥ (तत्) तां (ओम्) गायत्रीम् (धीमहि)

ध्यायेम [कथम्भूतां गायत्रीम्] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यैः (वरेण्यम्) उपासनीयाम्, (पुनः कथम्भूतां तां] (सवितुर्देवस्य) प्रकाशमानसूर्य्यस्य मण्डलमध्यवर्त्तिनीम् । [पुनः कथम्भूतां तां](भर्गः) ज्योतिःस्वरूपाम् । (यः) या गायत्री (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥ १२ ॥

भाष्यम् ॥ (तत्) तां (ओम्) गायत्रीम् (धीमहि) ध्यायेम [कथम्भूतां गायत्रीं] ( भुर्भुवःस्वः ) ब्राह्मणक्षत्रियवैश्यैः ( वरेण्यम् ) वरणीयामुपासनीयाम् वा [ पुनः कथम्भूतां तां ] (सवितुर्देवस्य) प्रकाशमानसूर्य्यस्य मण्डलमध्यवर्त्तिनीम् ॥ तत्र प्रमाणम् ॥ गायत्रीं भावयेद्देवीं [भावयेदुपासयेत्] सूर्य्यासनकृताश्रयाम् ॥ प्रातर्मध्याह्नसायाह्ने ध्यानं कृत्वा जपेत्सुधीः ॥ इति शाक्तानन्दतरङ्गिण्याम् उल्लास ४ ॥ १ ॥ पुनर्गान्धर्वतन्त्रे ॥ सूर्य्यमण्डलमध्ये तु कुलचक्रं विचिन्तयेत् ॥ बाल्योचितां स्फुरन्तीं च बालिकाञ्चक्रमध्यतः ॥ बालार्कमण्डलाभासां भानुवह्नीन्दुलोचनाम् ॥ पाशाङ्कुशौ शरांश्चापं धारयन्तीं शिवां स्मरेत् ॥ मध्याह्ने चिन्तयेद्देवीं त्रैलोक्यस्य प्रभामयीम् ॥ सर्वयौवनसम्पन्नामुज्ज्वलां परमां कलाम् ॥ पट० ६ ॥ २ ॥ पुनर्महाभारतान्तर्गत आदिपर्वणि ॥ सुखशीतानिलवहं प्रकृतिस्थार्कमण्डलम् ॥ अध्या० २२९।१८ ॥ ३ ॥ पुनर्गायत्रीमन्त्रभाष्ये ब्रह्मयामलतन्त्रे ॥ सवितुर्देवस्य दीप्तिक्रीडायुक्तस्य सूर्य्यस्य मण्डलमध्यवर्त्तिनो महाकाल्यादिदशमहाविद्यासंयुक्तस्य नारायणस्य परब्रह्मणः कुण्डलिनी गायत्री एव तेजःस्वरूपो भर्गः तम् भर्गं वयम् धीमहि ॥ ४ ॥ [पुनः कथम्भूतां तां] (भर्गः) ज्योतिःस्व-

रूपाम् (यः) या भर्गस्वरूपा गायत्री (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये सूर्य्यमण्डलान्तर्गतगायत्र्युपासनावर्णनं द्वादशप्रकरणम् ॥ १२ ॥

---

अथ त्रयोदशार्थमाह ॥

अन्वयः ॥ तद् ओम् सवितुर्देवस्य भर्गो धीमहि भूर्भुवःस्वर्वरेण्यम् यो नो धियः प्रचोदयात् ॥ १३ ॥

पदार्थः ॥ (तत्) तां (ओम्) गायत्रीम् (सवितुर्देवस्य) प्रकाशमानसूर्य्यस्यान्तर्गत (भर्गः) भर्गसि तेजसि (धीमहि) ध्यायेम [कथम्भूतसि भर्गसि ?] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्याभिर्वरणीये उपासनीये (यः) या सूर्य्यस्यान्तर्गततेजसि वर्त्तमाना गायत्री (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥ १३ ॥

भाष्यम् ॥ (तत्) तां (ओम्) गायत्रीम् (सवितुर्देवस्य) प्रकाशमानसूर्य्यस्यान्तर्गतम् (भर्गः) भर्गसि तेजसि विभक्तिव्यत्ययेन ॥ भर्गशब्दस्याधिकरणत्वेन विवक्षायां सप्तमीति गृह्यते, कस्मात् ? विवक्षातः कारकाणि भवन्तीति वाक्यात् ॥ तत्र प्रमाणम् ॥ तारुण्याकिणी प्रकृतितेजसि रक्तवर्णा मायामयी सुरकन्या किल पातु मेऽङ्गम् ॥ कल्पद्रुमाश्रयलताफलरूपिणी या भर्गस्थिता निखिल

सिद्धिगणे(१)र्नमस्या ॥ इति रुद्रयामलोत्तरतन्त्रे ॥ पट० ४१।२८॥१॥ पुनर्विश्वामित्रकल्पे ॥ भर्गो देवस्य मध्ये सवितुः सदृशे धीमहीत्येकरूपा ॥ धियो यो नः परमगहनस्तस्य तत् सूर्य्यमध्ये ॥ तेनात्र भर्गःशब्देन भर्गसीति गृह्यते [ कथम्भूते भर्गसि ? ] (भूर्भुवःस्वः वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिरुपासनीये वा (धीमहि) ध्यायेम ( यः ) या सूर्य्यस्यान्तर्गतभर्गसि वर्त्तमाना गायत्री ( नः ) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये सूर्य्यमण्डलान्तर्गतभर्गसि गायत्र्युपासनानिरूपणं त्रयोदशप्रकरणम् ॥ १३ ॥

—०—

### अथ चतुर्दशार्थमाह ॥

तत्रास्मिन् स्थाने गायत्र्या जगदुत्पत्तिर्निर्दिश्यते ॥ संहितायां ओङ्काराद्रहितं वा ओमिति मङ्गलार्थं (२) विघ्नानां शान्त्यर्थं च ज्ञात्वा तद्रहितं गायत्रीमन्त्रार्थमाह ॥

**अन्वयः ॥ तत् सवितुर्धीमहि देवस्य, भर्गो भूर्भुवःस्वर्वरेण्यम्, यो नो धियः प्रचोदयात् ॥ १४ ॥**

---

(१) सिद्धिगणैः इति—अथ सिद्धीनां लक्षणम् निर्दिश्यते ॥ द्विविधाः सिद्धयो लोके कल्पिताऽकल्पितास्तथा ॥ रसौषधिक्रियाजालमन्त्राऽभ्यासाऽऽदिसाधनात् ॥ सिद्धन्ति सिद्धयो यास्तु कल्पितास्ताः प्रकीर्त्तिताः ॥ अनित्या अल्पवीर्य्यास्ताः सिद्धयः साधनोद्भवाः ॥ साधनेन विनाऽप्येवं जायन्ते स्वत एव हि ॥ स्वात्मयोगैकनिष्ठेषु स्वातन्त्र्यादीश्वरप्रियाः ॥ प्रभूताः सिद्धयो यास्ताः कल्पना रहिताः स्मृताः ॥ सिद्धा नित्या महावीर्य्या इच्छारूपाः स्वयोगजाः ॥ चिरकालात् प्रजायन्ते वासनारहितेषु च ॥ इति योग० शिखोपनिषदि ॥ अध्या० १।१५१+१५६ ॥

(२) ओमिति मङ्गलार्थेति—ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कण्ठम् भित्वा विनिर्य्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति सर्वदर्शनसंग्रहान्तर्गतपातञ्जलदर्शने ॥ १४ ॥

पदार्थः ॥ (तत्) तां (सवितुः) प्रसवित्रीम् सावित्रीम् (धीमहि) ध्यायेम [कस्य प्रसवित्रीम् ?] (देवस्य) ब्रह्मादेः [कथम्भूतां तां सावित्रीं ?] ( भर्गः ) तेजःस्वरूपाम् [पुनः कथम्भूतां तां सावित्रीम् ?] (भूर्भुवःस्वः वरेण्यम् ) ब्राह्मणक्षत्रियवैश्यैर्वरणीयामुपासनीयाम् वा (यः) या सावित्री ( नः ) अस्माकम् ( धियः बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥ १४ ॥

भाष्यम् ॥ (तत्) ताम् (सवितुः) लिङ्गविभक्त्योर्व्यत्ययेन प्रसवित्रीं सावित्रीम् ॥ तत्र प्रमाणम् ॥ व्यत्ययो बहुलमिति ॥ पा० ३।१।८५ ( १ ) ॥ पुनर्म्महर्षिपातञ्जलिनाप्युक्तम् ॥ प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न कश्चित्प्राधान्येन विभक्तिमाश्रयन्ति । यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या ॥ म० १।१।४४ ॥ अनेनार्थप्राधान्यं भवति न विभक्तिरिति बोद्धव्यम् ॥ तेनात्र सवितृशब्देन प्रसवित्रीं सावित्रीमिति गृह्यते ॥ अथ सावित्री (गायत्री) एव जगतः प्रसवित्री नान्येति स्पष्टीक्रियते ॥ ओम् [ओंकारस्वरूपा] देवी ह्येकाऽग्र आसीत् । सैव जगदण्डमसृजत् । कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते ॥ तस्या एव ब्रह्मा अजीजनत्, विष्णुरजीजनत् । रुद्रोऽजीजनत् ॥

---

(१) व्यत्ययो बहुलमिति—सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ॥ व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥१॥ व्यत्ययो भवति स्यादीनामिति ॥ अनेन विकरणव्यत्ययः ॥ सुपां व्यत्ययः ॥ तिङां व्यत्ययः ॥ लिङ्गव्यत्ययः ॥ पुरुषव्यत्ययः ॥ कालव्यत्ययः ॥ आत्मनेपदव्यत्ययः ॥ परस्मैपदव्यत्ययः ॥ स्वरव्यत्ययः ॥ कर्तृव्यत्ययः ॥ यङ्व्यत्ययश्च ॥ इति महाभाष्ये ॥

सर्वे मरुद्गणा अजीजनत् । गन्धर्वाऽप्सरस: किन्नर: वादित्रवादिनस्समन्तादजीजनत् । भोग्यमजीजनत्, सर्वमजीजनत् । इति बह्वृचोपनिषदि ॥ पुन: श्वेताश्वतरोपनिषदि ॥ अजामेकां लोहितशुक्लकृष्णां बह्वी: प्रजा: सृजमानांसरूपाम् ६।८॥ पुनस्तत्रैव ॥ न तस्य [निष्कलब्रह्मण:] कार्य्यं करणञ्च विद्यते, न तत् समश्चाभ्यधिकश्च दृश्यते ॥ परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया च ॥ ५।८ ॥ २ ॥ पुन: शंखसंहितायाम् ॥ गायत्री चैव जननी गायत्री पापनाशिनी ॥ अ० ११।१३ ॥ ३ ॥ पुनर्य्योगशास्त्रान्तर्गतशिवसंहितायाम् ॥ मायैव विश्वजननी नान्या तत्त्वधिया परा ॥ पट० १।६८ ॥ पुनर्महर्षिवशिष्ठेनोक्तं गायत्रीमन्त्रभाष्ये ॥ पराऽसौ सविता साक्षात् ॥ पुनस्तत्रैव ॥ जगत: प्रसवित्रीं तां सवितु: सृष्टिकारिणीम् ॥ ४ ॥ पुनर्निर्वाणतन्त्रे ॥ प्रकृत्या जायते पुंसां प्रकृत्या सृजते जगत् ॥ तोयात्तु बुद्बुदं देवि ! यथा तोये विलीयते ॥ ब्रह्मविष्णुशिवा देवि ! जायन्ते प्रकृत्या ध्रुवम् ॥ तथा प्रलयकाले तु प्रकृत्या लुप्यते पुन: ॥ पट० ५ ॥५॥ पुनर्निरुत्तरतन्त्रे ॥ प्रकृत्या जायते विश्वं प्रकृत्याच विलीयते॥ पट० ९ ॥६॥ पुनाराधातन्त्रे ॥ पुरुष: कूटरूपस्तु कार्य्यकारणवर्ज्जित: ॥ तस्मात्तु पुरुषो विष्णु: सच्चिदानन्दविग्रह: ॥ प्रकृति: परमेशानि ! कार्य्यकारणविग्रह: ॥ न कार्य्यकारणं देवि ! ईश्वरस्तु कदाचन ॥ प्रकृत्या सहयोगेन [प्रकृति: स्वरूपधारणेन] कार्य्यकारण ईश्वर: ॥ पट० १३ ॥७॥ पुनर्गन्धर्वतन्त्रे॥ किं पुन: शक्तिरूपेण परब्रह्मस्वरूपिणी ॥ तस्या: पुन: पुन: सृष्टिर्ज्जायते लीयते सदा ॥ तस्माच्छक्तिप्रधाना च शक्त्या व्याप्यमिदं जगत् ॥ पट० ॥३॥ पुनस्तत्रैव॥ प्रकृत्या क्रियते कर्म्म साक्षी पुरुष उच्यते ॥ तन्मायामोहितं सोऽथ कर्त्ताहमिति

मन्यते ॥ न कर्त्ता पुरुषो देवि ! कर्त्री प्रकृतिरुच्यते ॥ पुरुषं कारणं नास्ति निर्गुणत्वात् सदा प्रिये ! ॥ तथा कारणकर्त्तृत्वं सगुणायां प्रतिष्ठितम् ॥ पट० २७ ॥७॥ पुनर्म्महानिर्वाणतन्त्रे ॥ त्वं परा प्रकृतिः साक्षाद्‌ब्रह्मणः परमात्मनः ॥ त्वत्तो जातं जगत् सर्वं त्वं जगज्जननी शिवे ! ॥ महदाद्यणुपर्य्यन्तं यदेतत् सचराचरम् ॥ त्वयैवोत्पादितं भद्रे ! त्वदधीनमिदं जगत् ॥ त्वमाद्या सर्वविद्यानामस्माकम[ब्रह्मविष्ण्वादीनां]पि जन्मभूः ॥ पट० ४।१० ॥ ८ ॥ पुनः सांख्यसूत्रे ॥ सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्म्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति ॥ अध्या० १ । सू० ६१ ॥ ८ ॥ पुनः सांख्यप्रवचनभाष्ये ॥ विकारजननीं मायामष्टरूपामजां ध्रुवाम् ॥ अध्या० १ । सू० २६ ॥ पुनस्तत्रैव ॥ प्रकृतेराद्योपादानतान्येषां कार्य्यत्वश्रुतेः ॥ अ० ६ । सू० ३२ ॥ तत्र भाष्यम् ॥ महदादीनां कार्य्यत्वश्रवणात् तेषां मूलकारणतया प्रकृतिः सिद्धिरित्यर्थ इति सांख्यप्रवचनभाष्ये ॥८॥ पुनः पञ्चदश्याम् । निद्रा शक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ॥ ब्रह्मण्येषा तथा माया सृष्टिस्थित्यन्तकारिणी ॥ परि० १३।८४ ॥ १० ॥ पुनर्म्महाभारतान्तर्गतशान्तिपर्वणि ॥ प्रकृतिः कुरुते देवि ! भवप्रलयमेव च ॥ अध्या० ३०२। ३१ । जनकं प्रति वशिष्ठवाक्यम् ॥ ११ ॥ तेनात्र प्रकृत्येव प्रसविनीति बोद्धव्या ॥ अथ प्रकृतिवाचकोऽव्यक्तशब्देन सृष्टेरुत्पत्तिर्निर्दिश्यते ॥ तत्र मानवधर्म्मशास्त्रे ॥ ततः स्वयम्भुर्भगवानव्यक्तो व्यञ्जयन्निदम् ॥ महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ॥ अध्या०१।६। पुनस्तत्रैव । यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्॥ तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते ॥ अ० १।११ ॥ १ ॥

पुनः सुश्रुतसंहितायाम् शारीरस्थाने ॥ सर्वभूतानां कारणमकारणं सत्त्वरजस्तमो लक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम । तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवोदकानाम् ॥ अध्या० १।१ ॥ २ ॥ पुनर्ज्ञानसङ्कलिनीतन्त्रे । अव्यक्ताच्च भवेत् सृष्टिरव्यक्ताच्च विनश्यति ॥ पट० १।४ ॥ ३ ॥ पुनर्य्योगशास्त्रान्तर्गतब्रह्मज्ञानतन्त्रे ॥ अव्यक्ताच्च भवेत् सृष्टिरव्यक्ताच्च विनश्यति ॥ अव्यक्तं ब्रह्मणो ज्ञानं सृष्टिसंहारवर्जितम् ॥ पट० १ ॥ ४ ॥ (प्रश्नः) तत्र कोऽव्यक्तः ? ॥ (उत्तरम्) प्रकृतिरेवाव्यक्तशब्देन ज्ञातव्या ॥ तत्र प्रमाणम् ॥ तत्र महाभारतान्तर्गतशान्तिपर्वणि जनकं प्रति वशिष्ठवाक्यम् ॥ अव्यक्तमाहुः प्रकृतिं परां प्रकृतिवादिनः ॥ अध्या० ३०६।२७ ॥ पुनस्तत्रैव ॥ अव्यक्तं प्रकृतिं प्राहुः पुरुषेति च निर्गुणः ॥ अध्या० ३१८।३९ ॥ जनकं प्रति याज्ञवल्क्यवाक्यम् ॥ पुनस्तत्रैवादिपर्वणि । इन्द्रियाणि च पञ्चात्मा रजस्सत्त्वं तमस्तथा ॥ इत्येक सप्तदशको राशिरव्यक्तसंज्ञकः ॥ अध्या० २०९।२० ॥ पुनस्तत्रैव । इन्द्रियैः सृज्यते यद्यत्तदव्यक्तमिति स्मृतम् ॥ अध्या० २१०।१२ ॥ पुनस्तत्रैव । अव्यक्तमक्षरं [ गायत्र्याः साकारस्वरूपम्] ब्रह्मप्रधानं त्रिगुणात्मकम् ॥ आत्मानमव्ययञ्चैव प्रकृतिं प्रभवप्रभुम् ॥ अध्या० ६२।८६ ॥ १ ॥ पुनः पञ्चदश्याम् ॥ अव्यक्तत्वे शक्तिरुक्ताव्यक्तत्वे घट नाम भूत ॥ परि० १३।२५ ॥ २ ॥ तेनाव्यक्तशब्देन प्रकृतीति सिद्धम् ॥ (धीमहि) ध्यायेम ( प्रश्नः ) कस्य प्रसवितीम् ?॥ (उत्तरम्) (देवस्य) ब्रह्मादेः ॥ तत्र प्रमाणम् ॥ यो देवः स देवतेति निरु० दै० अ० २ खं २१ ॥ अग्निर्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता व-

रुणो देवता ॥ यजु० अध्या० १४। मं० २० ॥ १ ॥ पुनर्गोपथब्राह्मणे ॥ सोमो देवो देवता भवति, विष्णुर्देवो देवता भवति, आदित्यदेवो देवता भवति, अग्नीषोमौ देवते भवतः, वसवो देवा देवता भवन्ति, रुद्रा देवा देवता भवन्ति, वरुणो देवो देवता भवति, मित्रा वरुणो देवो देवते भवतौ, त्वष्टा देवो देवता भवति, कामो देवो देवता भवति, स्वर्गलोको देवो देवता भवति ॥ पूर्वा० ४।८ ॥ पुनस्तत्रैव ॥ अर्द्धमासा देवा देवता भवन्ति, ब्रह्मादेवो देवता भवति, चत्र देवो देवता भवति, मासा देवा देवता भवन्ति, इन्द्रो देवो देवता भवति, देश्यो देव्यो देवता भवन्ति, लोका देवा देवता भवन्ति, सम्वत्सरो देवो देवता भवति, प्रजापतिर्देवो देवता भवति, अहोरात्राभ्यां वै देवाः द्योर्वै देवताः ॥ पू० ४।१० ॥ २ ॥ पुनः शतपथब्राह्मणे। विद्वाᳫंसोहिदेवः, असुराः प्राणपोशका मोक्षोपायरहिताः॥ ३।७।३।१० ॥ पुनस्तत्रैव। सत्यं देवा अनृतं मनुष्याः॥ १।१।२।१७। पुनस्तत्रैव ॥ प्राणाः देवाः। ६।२।३।१५ ॥ ३ ॥ पुनः सांख्यसूत्रे महर्षिकपिलोऽप्याह। देवादिप्रभेदाः ॥ अध्या० ३। सू० ४६ ॥ तत्र भाष्यम् ॥ ब्रह्मप्राजापत्यैन्द्रपैत्रगन्धर्वयक्षराक्षसपैशाचा इत्यष्टविधौ देवाः सर्ग इति सांख्यप्रवचनभाष्ये ॥ तेनात्र देवशब्देन ब्रह्मादेरिति सिद्धम् ॥ आद्याशक्तिर्महाकाली देव[जगत्]निर्माणकारिणीति महानिर्वाणतन्त्रे ॥ पट० १० ॥ [कथम्भूतां सावित्रीं] (भर्गः) ज्योतिस्वरूपाम् [पुनः कथम्भूतां तां ?] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यैर्वरणीयामुपासनीयाम् (यः) या ब्रह्मादेः प्रसवित्री सावित्री (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति प्रेरयेत् वा ॥ इदानीं सम्प्रदायोपासनापक्षीयपूर्वोक्तभाष्यान्तर्गतभावः

स्पष्टीक्रियते ॥ तत् तां सवितुर्देवस्य मण्डलान्तर्गतां तेजोमयीं, ब्राह्मणादिद्विजाभिरहरहरुपासनीयाम् जगदुत्पत्तिरक्षणलयकारिणीमोङ्कारस्वरूपाम् गायत्रीम्, गायत्रीसावित्रीसरस्वतीभिरेवेच्छाज्ञानक्रियाशक्तिभिर्वा ऋग्यजुस्सामभिर्वाओमित्येतस्याकारोकारमकारमात्रात्रयस्वरूपैः प्राणायामाद्यष्टाङ्गयोगैर्वा षट्चक्रान्तर्गतमूलाधारादिपद्मादिषु वा पृथिव्यन्तरीक्षद्युस्थानेषु प्रातर्मध्याह्नसायंकालेषु वा वयम् मोक्षाभिलाषिणो ब्राह्मणादयः धीमहि या गायत्री नः अस्माकम् धियः बुद्धीः धर्म्ममार्गेषु प्रेरयति । यद्वा यद्गायत्रीस्वरूपम् वयम् धीमहि तन्नोऽस्माकम् धियः बुद्धीः धर्म्ममार्गेषु प्रेरयेत् वा स्वप्रादुर्भूतात्मज्ञानमस्माकमुपदिशेत् ॥

इति श्रीमहर्षिकात्यायनवंशोद्भव श्री १०८ युत् मिश्रमन्नालालात्मज
श्रीमिश्रजगन्नाथविरचिते सर्वतन्त्ररहस्ये आर्य्यसम्प्रदायप्रदर्शक-
गायत्रीभाष्ये गायत्रीती जगदुत्पत्तिवर्णनं नाम
चतुर्दशप्रकरणम् ॥ १४ ॥

इति पूर्वार्द्धम् ।

—०—

# उत्तरार्द्धम् ॥

## भूमिका ।

हम लोगों की अन्ध परम्परा के अनुसार यह तत्सवितुरिति सावित्रीमन्त्र सूर्य्यकी उपासना का सूचक माना जाता है, और उस अन्धपरम्परा के माननेवाले पुरुष इसी रात्रि दिवस के विभाग करनेवाले आकाशमण्डलवर्त्ती मण्डलाकार प्रकाशमान पदार्थ को सूर्य्य संज्ञक मानि अपना उपास्यदेवता बताते हैं "जैसा कि पौराणिक मतसे भी सिद्ध होता है", परन्तु ऐसा विचारज्ञानशून्य पुरुषों के लिये कहा जासकता है विद्वान् तथा बुद्धिमान् पुरुष कदापि ऐसी बातों को सत्य नहीं मान सकते, क्योंकि ऐसा कथन और लेख वेदादिक सत्य शास्त्रों तथा सूर्य्यसिद्धान्तादि ज्योतिष शास्त्रों में नहीं पाया जाता है किन्तु उन ग्रन्थों में इस मण्डाकार सूर्य्यको जड़ (१) निरूपण किया है, और जब सूर्य्य जड़ ठहरा तो वह जड़ होने के कारण हम लोगों का उपास्यदेवता कदापि नहीं हो सकता। यदि लाक्षणिक भाव के आश्रयीभूत होकर वे लोग सूर्य्य को उपास्यदेवता बतलाते हों तो उससे सूर्य्यमण्डलान्तर्गत चैतन्य पुरुष की उपासना सिद्धि होती, और वहचैतन्य पुरुष हम लोगों का उपास्यदेवता भी ठहर सकता है ! क्योंकि वेदादिक सत शास्त्रों में उस परमेश्वर को उसके गुण कर्म्मानुसार (२) अनेक नामों से सम्बो-

(१) न तत्र सूर्य्यो भातीति कठोपनिषदि ॥ १।५।१५ ॥ पुनस्तत्रैव ॥ भयादग्निस्तपति भयात्तपति सूर्य्य इति ॥ १।६।२ ॥

(२) प्रभूत्सूयमानत्वात्सूर्य्यः, सवनात्सवितादानादादित्यः, पवनात्पावनानित्यादि मैत्राय०

धन किया है। इसी पूर्वोक्त लाक्षणिक मतके आश्रयी भूत होकर
हमने भी उस परमेश्वर को उसके गुण कर्मानुसार "अर्थात्
अपने प्राणों का रक्षक तथा सर्वव्यापक मानि" गायत्री नाम से
उपास्य देवता ठहरा कर सूर्य्यादिक प्रकाशमान पदार्थों में
उपासना का निरूपण इस ग्रन्थ के पूर्वार्द्ध में किया है॥

इस अन्धपरम्परा के मत तथा गायत्री मन्त्र के प्रकरणानु-
सार यह गायत्री मन्त्र उपासना ही का प्रतिपादक कहा जा-
सकता है परन्तु उस मन्त्रके श्रेष्ठत्व, प्रयोजन अर्थात् वेदारम्भ
(१) संस्कार की ओर सूक्ष्म रीति से विचारने, पूर्वोक्त मन्त्र पर
शिवादि पूर्वाचार्य्यों की अनेक २ पक्षों पर भाष्य देखने, धातू-
नाम्वा शब्दानामनेकार्थत्वात्, इस प्राचीन आशय पर ध्यान देने
और शास्त्रों में सृष्टि के आदि समय में उपदेश प्रकरण के देखने
(२) से यही बात स्पष्ट रीति से जानी जाती है कि तत्त्ववित्-
रिति सावित्री मन्त्र भी व्याकरण के चतुर्दश शिव सूत्रों की भांति
मुख्य वेद (३) है कि जिसके विना जाने ब्राह्मणादि वर्णत्रय

---

सवनात् सविता, आदानादादित्यः, पवनात्पवनोऽथा-
उप० प्र० ७ ॥ पुन ऐतरेयब्राह्मणे ॥
ऽपोऽप्यावनादित्यवाङ्ः। गायान् प्राणान् त्रायते सा गायत्रीति ॥

(१) वेदारम्भ इति — वेद + आरम्भ। तत्र विद्ज्ञाने, विदसत्तायाम्, विदलाभे, विदवि-
चारणे, विदसुखाद्यनुभवे, आख्याने, वादे च, एतेभ्यो हलश्चेति सूत्रेण कारणाधिकरण-
कारकयोर्घञ् प्रत्यये कृते वेदशब्दः साध्यते। आरम्भ पु० आ + रभ घञ् मुनम्। त्वरायाम्,
वेगे, उद्यमे, दर्पे, उपक्रमे, प्रस्तावनायाञ्च, कर्मणि घञ्, आरभ्यमाणे ॥

(२) चत्वारो वेदाः सङ्गाः, सोपनिषदाः सेतिहासाः पुराणास्ते सर्वे गायत्र्या प्रवर्त्तन्ते इति
विश्वामित्रेणोक्तम् गायत्रीकल्पे ॥

(३) अथ सावित्रीमन्त्रस्य वेदत्वं निर्दिश्यते ॥ तत्र महानिर्वाणतन्त्रे शिववाक्यम् ॥ इ-
यन्तु ब्रह्मसावित्री यथा भवति वैदिकी ॥ तथैव तान्त्रिकी ज्ञेया प्रशस्तोभयकर्मणि ॥ सतो-

वंशोद्भव पुरुष अन्य विद्या में निपुण तथा श्रेष्ठ विद्वान् होने पर भी शूद्रत्व भाव को प्राप्त हो अपनी २ श्रेणी और जाति से च्युत होकर व्रात्यश्रेणी में गिने जाते हैं। हमारे प्राचीन आर्य्य आचार्य्यों, और ऋषियों मुनियों ने इसी सावित्री तन्त्र को वेदरूपी शास्त्र का मुख्य सूत्र (१) और वेद मन्त्र मानि और वेदारम्भ संस्कार में उसकी प्रयोजनके कारण को जानि हम लोगों को धर्ममार्ग पर चलाने के निमित्त जो२ ग्रन्थ उन्होंने रचे, उन सबका आशय इसी सावित्रीमन्त्रपर निर्भर रक्खा अर्थात् इसी मन्त्रके तात्पर्य्यों को लेकर उन्होंने अपने २ ग्रन्थों की रचना की। जब हम लोगों को यह बात स्वीकार है कि हम वैदिक मतावलम्बी हैं और जितने ऋषिप्रणीत धर्मशास्त्रादिक हमारे प्राचीन आर्षग्रन्थ हैं उन सब की जड़ एकमात्र केवल वेद ही है क्योंकि वेदानुकूल ही होनेसे वे सब प्रमाणिक माने जाते हैं और वेदके सब मन्त्रों में से यह सावित्री मन्त्र ही अपने सतत्व भाव होनेके कारण श्रेष्ठ है, तब हमलोगों को यह भी उचित है कि अपने सब साम्प्रदायिक तथा लौकिक विषयों को भी

---

ऽत्र कथितं देवि! द्विजानां प्रवलि कलौ॥ गायत्र्यामधिकारोऽस्ति नान्यमन्त्रेषु कर्हिचित॥ उल्ला० ८।८६॥ पुनस्तत्रैव यज्ञोपवीतप्रकरणे माणवकं प्रत्याचार्य्यवाक्यम्॥ को वाश्रमस्ते तन. य ब्रूहि किन्ते मनोगतम॥ ततः शिष्यः सावहितो धृत्वा गुरुपदद्वयम्॥ करोतु मामाश्रमिणं ब्रह्मविद्योपदेशतः॥ एवं प्रार्थयमानस्य दक्षकर्णे शिशोस्तदा॥ श्रावयित्वा त्रिधा तारं सर्वमन्त्रमयं शिवे!॥ व्याहृतित्रयमुच्चार्य्य सावित्रीं श्रावयेद्गुरः॥ उल्ला० ९।२११+२१३॥ तेन सावित्रीमन्त्र एव मुख्यो वेदे इति सिद्धम्॥

(१) सूचनात्सूत्रमित्याहुः सूत्रं नाम परम्पदम्॥ इति ब्रह्मोपनिषदि॥ तुम सर्वेषामार्य्य धर्म्माणां सूचकत्वात् सावित्रीमन्त्रः सूत्र इति भावः॥

अपनी २ विद्या और बुद्धि के बल से वेद ही के अर्थ से निकालने की चेष्टा करके उन प्राचीन आर्षग्रन्थों को वेदानुकूल सिद्ध करें परन्तु इस बातपर ध्यान रहै कि अपना वेदार्थ उन पूर्वाचार्य्यों तथा ऋषियों के सिद्धान्तों से विपरीत न होने पावे क्योंकि ऐसा न करने से हमारा किया हुआ अर्थ अनर्थ कहलावेगा और उस अनर्थ वेदार्थ करने के कारण हम संसार में पापी (१) तथा निन्दनीय समझे जावेंगे। हम अपने मित्रों को भी इस बात का पूरा विश्वास दिलावें कि जो कुछ हमारे प्राचीन आर्य्य ऋषियोंने अपने २ ग्रन्थों में कहा है वह सब वेदानुकूल है, और जो २ बातें उनके ग्रन्थों में हमको वेदाशय से विपरीत, कुत्सित, घृणित, या असम्भवित देखने में आवें उन सबको आधुनिक स्वार्थी पुरुषों की कपोलकल्पित तथा वेदविरुद्ध मानि उनके त्यागने की चेष्टा करें।

इस पूर्वोक्त आशय के प्रकाश करने के निमित्त मैंने इस अपनी आर्य्य-सम्प्रदाय-प्रदर्शक-गायत्री-भाष्य का यह उत्तरार्द्ध नामक द्वितीय खण्ड निर्मित किया, और इस खण्ड में भी पूर्वोक्त गायत्रीमन्त्रपर आर्य्योपदेश सम्बन्धी चौबीस (२४) भाष्यें को कि जिनके द्वारा सम्पूर्ण आर्य्य धर्मों का निरूपण भली भांति से किया गया है।

अब विद्वान् तथा धर्मानुरागी पुरुषों से यही प्रार्थना है कि

---

(१) उद्विजेत् स तु वेदेभ्यो [वेदार्थेभ्यो] दावाग्निरिव मानव:॥ शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिस्मृतिम्॥ इति महा० भा० सभा० प० अध्या० ९९।११२॥ युधि० प्र० मार्कण्डेय०॥

वे लोग अपनी गुणग्राहकता ही को अपना श्रेष्ठ धर्म मान मेरी इस थोड़ी विद्या और बुद्धि के दोषों पर दृष्टिपात न कर केवल इस ग्रन्थ के गूढ़ाशयों को अपनी न्याय और कृपा भरी दृष्टियों से विचार सत्यका ग्रहण और असत्य का त्याग करें, और उस अपने विचार के द्वारा अन्य अज्ञानी पुरुषों को भी अपने२ उपदेशों से कृतार्थ करि मेरे इस परिश्रम को सफल करें॥

समस्तीपूर } भवदीय—
जगन्नाथ मिश्र

———

# उत्तरार्द्धम् ॥

## प्रथमप्रकरणम् ॥

**मन्त्रः ॥ ओ३म् भूर्भुवःस्वः तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥**

अन्वयः ॥ तद्देवस्य वरेण्यम् भर्गो धीमहि भूर्भुवःस्वः सवितुर्यो नो धीयः प्रचोदयात् ॥ १ ॥

पदार्थः ॥ वयम् राज्याधिकारिणः क्षत्रियाः (तत्) तस्य (देवस्य) राज्ञः (वरेण्यम्) श्रेष्ठम् (भर्गः) तेजः दण्डम् ( धीमहि ) धारयामि [ कस्मै प्रयोजनाय ?] ( भूर्भुवःस्वः ) ब्राह्मणक्षत्रियवैश्यानाम् ( सवितुः ) "व्यत्ययेन" सवित्रे प्रेरणाय (यः) दण्डः (नः) अस्माकं राज्ञाम् (धियः) बुद्धीः (प्रचोदयात्) राज्यकार्य्येषु प्रेरयति ॥ १ ॥

भाष्यम् ॥ जयन्ति यत्र पुण्यवन्तः सनातनधर्म्मावलम्बिनः स्वदेशहितैषिणः, परोपकारिणः, स्वस्वजीविकानिर्वाहवन्तो जनास्तेषां स्वदेशनिरुपद्रवता राज्याविप्लवाभिलाषैव परमो धर्म्मः भ-

वन्त्यु त्सपदाधिकारिणः सभास्तारस्ते चापि राजानं प्राप्तलक्षा-रान्तान् विक्रमनवरत्नानीव सन्निवेशापयन्ति, अत्र तु राजदण्ड-स्यैव कारणं परस्परोपकारकरणात् क्वतो नान्यो द्दश्यते, राजदण्डा-त्प्रजानामनुशासकं तदेव सर्वतो व्याप्य दण्ड्यान्दण्डयति निर्व्यप-यत्यप्यधर्म्मादीन्देशतो वितनोति च परस्परा परमा भक्तिः, तदेव वक्ष्यमाणप्रकरणे स्पष्टीक्रियते ॥ ( तत् ) तस्य ( देवस्य ) दानादि-गुणयुक्तस्य राज्ञः ॥ तत्र प्रमाणम् ॥ यो देवः स देवतेति निरु० दै० ११५ ॥ चत्वं देवो देवता भवति प्रजापतिर्देवो देवता भव-तीति गोपथब्राह्मणे ॥ पू० ४।१० ॥ राजाभट्टारको देव इत्यमरः ॥ ना० व० १।१२ ॥ तेनात्र देवशब्देन प्रजापतौ राजेति गृह्यते ॥ (वरेण्यम्) वरेण्यः व्रियते स्वीक्रियतेऽसौ वरेण्यः । श्रेष्ठो वा इत्यौ-णादिकः [वृ एन्य ३।९८] ॥ मुख्यवर्य्यवरेण्याश्चेत्यमरः ॥ ३।५७ ॥ तेन वरेण्यम् श्रेष्ठम् ( भर्गः ) तेजः दण्डम् वा ॥ तत्र प्रमाणम् ॥ ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः ॥ मनुः ॥ अध्या० ७।१४ ॥ पुनस्तत्रैव ॥ दण्डो हि सुमहत्तेजो दुर्द्धरश्चा-कृतात्मनाम् ॥ अध्या० ७।२८ ॥ तेनात्र भर्गशब्देन दण्ड इति वि-ज्ञम् ॥ (धीमहि) धीङ् आधारे [दि० प० लिङि बहुलञ्छन्दसि । २।४।७६ ॥ इति विकरणस्य लुक्] तेन धारयामि [कस्मै प्रयोज-नाय ? ] भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यानाम् ( सवितुः ) सवित्रे प्रेरणाय "अत्र चतुर्थ्यर्थे बहुलञ्छन्दसि ॥ पा० अ० २।३।६२ ॥ अनेन चतुर्थी ज्ञेया ॥ यद्वा स्वस्ववर्णाश्रमानुसारं धर्म्ममार्गेषु प्रेरणाय ॥ तत्र प्रमाणम् ॥ स राजा पुरुषो दण्डः स नेता शासिता च सः ॥ चतुर्णामाश्रमाणाञ्च धर्म्मस्य प्रतिभूः स्मृतः ॥ मनुः अध्या० ७।१७ ॥ पुनस्तत्रैव ॥ पिताचार्य्यः सुहृन्माता

भार्य्या पुत्रः पुरोहितः ॥ नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मेण तिष्ठति ॥ अध्या० ८।३३५ ॥ १ ॥ पुनर्म्महाभारतान्तर्गतशान्तिपर्वणि ॥ दण्डस्यैव भयादेते मनुष्या वर्त्तमान् स्थिताः ॥ नाभीते यजते राजन् नाभीते दातुमिच्छति ॥ अध्या० १५।१२ ॥ पुनस्तत्रैव ॥ दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ॥ दण्डः सुप्तेषु जागर्त्ति दण्डम् धर्म्मविदुर्बुधाः ॥ अध्या० १५।२ ॥ २ ॥ (यः) दण्डः (नः) अस्माकं राज्ञाम् (धियः) बुद्धीः (प्रचोदयात्) प्रजापालनादिराज्यकार्य्येषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीति राजदण्डधारणविधिनिरूपणं

प्रथमप्रकरणम् ॥ ३ ॥

—०—

अथ द्वितीयार्थमाह ॥

क्षत्रियाणां युद्धमपि परमो धर्मेति गायत्रिती निर्दिश्यते ॥

अन्वयः ॥ देवस्य सवितुर्भूर्भुवःस्वस्तद्वरेण्यम् भर्गो धीमहि यो नो धियः प्रचोदयात् ॥ २ ॥

पदार्थः ॥ वयम् राज्याधिकारिणः क्षत्रियाः (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय, (भूः) पृथिव्यै (भुवः) प्राणाय प्रजानां प्राणरक्षणाय (स्वः) स्वर्गाय वा (तद्वरेण्यम्) तच्छ्रेष्ठम् (भर्गः) वीर्य्यम् युद्धम् (धीमहि) धारयामः करोमीति भावः (यः) यद्युद्धम् (नः) अस्माकम् राज्ञाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु युद्धाय वा प्रेरयति ॥ २ ॥

भाष्यम् ॥ वयम् राज्याधिकारिणः क्षत्रियाः (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय, (भूः) पृथिव्यै, वा (भुवः) प्राणाय, च प्रजानां प्राणरक्षणायेति भावः (स्वः) स्वर्गलाभाय वा (तद्वरेण्यम्) तच्छ्रेष्ठम् (भर्गः) वीर्य्यम् युद्धम् ॥ तत्र प्रमाणम् ॥ वीर्य्यं वै भर्गः ॥ शत० ब्रा० ५।४।५।१ ॥ युद्धं वै राजन्यस्य वीर्य्यम् ॥ शत० ब्रा० १३।१।५॥ तेनात्र भर्गःशब्देन युद्धमिति स्पष्टं भवति ॥ (धीमहि) धारयामः युद्धं करोमि इति भावः ॥ (१) संग्राम एव परमं क्षात्रधर्म्म इति स्पष्टीक्रियते ॥ तत्र मानवधर्म्मशास्त्रे ॥ समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ॥ न निवर्त्तेत संग्रामात् क्षात्रं धर्म्ममनुस्मरन् ॥ संग्रामेष्वनिवर्त्तित्वम्प्रजानाञ्चैव पालनम् ॥ शुश्रूषा ब्राह्मणानाञ्च राज्ञां श्रेयस्करम्परम् ॥ अध्या० ७।८७+८८ ॥ १ ॥ पुनर्विष्णुसंहितायाम् ॥ नास्ति राज्ञां समरे तनुत्यागसदृशो धर्म्मः ॥ अध्या० ३ सू० ३८ ॥ २ ॥ पुनर्धर्म्मशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् ॥ य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखः ॥ अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ अध्या० १।३२४ ॥ ३ ॥ पुनर्गौतमसंहितायाम् ॥ विजये भये विशेषेण वर्य्या च रथधनुर्भ्यां संग्रामे संस्थानमनिवृत्तिश्च ॥ अध्या० १० ॥ ४ ॥ पुनर्महानिर्वाणोत्तरतन्त्रे शिव-

(१) यद्वा वयम् क्षत्रियादिसैन्यसभाः स्व (देवस्य) राज्ञः (सवितुः) व्यत्ययेनैश्वर्य्याया-ऽऽस्मसेवादियज्ञाय वा (भूः) पृथिव्यै (भुवः) प्राणरक्षणाय (स्वः) स स्वर्गाय धनाय वा (तद्वरेण्यम्) तच्छ्रेष्ठम् (भर्गः) वीर्य्यम् युद्धम् (धीमहि) धारयामः, घोरयुद्धं करोमीति भावः ॥ अथ युद्धकालेऽपि क्षत्रियादिभिर्मन्त्राणां जपप्रकारो शास्त्रान्तरे दृश्यते, तदेव स्पष्टीक्रियते ॥ अथ मन्त्रानपि जपन् रौद्रमस्त्रमुदीरयन् ॥ शरान् भूयः समादाय रामः क्रोधसमन्वितः ॥ मुमोच स महातेजाश्चापमायात्मवीर्य्यवान् ॥ तांश्छरान् राक्षसेन्द्राय चिक्षपाच्छिन्नसायकः ॥ इति वाल्मीकीयरामायणे युद्धकाण्डे रामरावणयोर्युद्धे ॥ स० १००।३६+३७ ॥

वाक्यम् ॥ न बिभेति रणाद् यो वै संग्रामेऽप्यपराङ्मुखः ॥ धर्म्मयुद्धे मृतो वापि तेन लोकत्रयं जितम् ॥ उल्ला० ८।६७ ॥ पुनस्तत्रैव राजधर्मे ॥ राजन्यानाञ्च सद्वृत्त्यं संग्रामो भूमिशासनम् ॥ ८।१११ ॥ पुनस्तत्रैव ॥ न्यायं युद्धं तथा सन्धिं कर्म्माण्यन्यानि यानि च ॥ मन्त्रिभिः सह कुर्वीत विचार्य्य सर्वथा नृपः ॥ धर्म्मयुद्धेन योद्धव्यं न्यायदण्डपुरस्क्रियाः ॥ करणीया यथाशास्त्रं सन्धिं कुर्य्याद् यथाबलम् ॥ उपायैः साधयेत् कार्य्यं युद्धं सन्धिञ्च शत्रुभिः ॥ उपायानुगताः सर्वा जयक्षेमविभूतयः ॥ ८।११९ + १२१ ॥ पुनस्तत्रैवैकादशोल्लासे । याचकं धनिनं दृष्ट्वा वीरं युद्धपराङ्मुखम् ॥ पश्यन् सूर्य्यं स्मरन् विष्णुं सचेलः स्नानमाचरेत् ॥ १६२ ॥ अतएव क्षत्रियाणां संग्राम एव श्रेष्ठधर्म्म इति सिद्धम् ॥ (यः) यद्युद्धम् (नः) अस्माकम् राज्ञाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु वा युद्धाय प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीस्तौ युद्धवर्णनं द्वितीयप्रकरणम् ॥

—०—

अथ तृतीयार्थमाह ॥

अन्वयः ॥ भूर्भुवःस्वस्तद्वरेण्यम् भर्गो धीमहि देवस्य सवितुर्यो नो धियः प्रचोदयात् ॥ ३ ॥

पदार्थः ॥ भो भो (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्याः "स्व" ( तद्वरेण्यम् ) तच्छ्रेष्ठम् ( भर्गः ) तेजो धर्म्मम् (धीमहि) "युष्माकम् जातिजानपदादीन् धर्म्मानालोक्य" धारयामः [कस्मै प्रयोजनाय ?] (देवस्य) व्यवहारिणः ( सवितुः ) ऐश्वर्य्याय (यः) यो धर्म्मः

(नः) अस्माकम् राज्ञाम् (धियः) बुद्धीः (प्रचोदयात्) "युष्माकम्मध्ये धर्म्मस्थापनाय प्रजानाम् रक्षणाय च" प्रेरयति ॥ ३ ॥

भाष्यम् ॥ राजाऽन्यनरपतीन् पराजित्य परराष्ट्रेऽपि स्वधर्म्म-स्थापनकामनया तद्देशवासिनो द्विजातिप्रजावर्गानाहूयाज्ञाप-यतीदम् । भो भो (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्याः स्व (तद्वरेण्यम्) तच्छ्रेष्ठम् (भर्गः) तेजःस्वरूपं धर्म्मम् ॥ तत्र प्रमाणम् ॥ अयं धर्म्मः सर्वेषां भूतानां मध्वस्य धर्म्मस्य सर्वाणि भूतानि मधु यश्चायमस्मि-न्धर्मे तेजोमयोऽमृतमय इति ॥ बृहदारण्योपनिषदि ॥ १।५।११ ॥ तेन भर्गःशब्देन धर्मेति गृह्यते ॥ (धीमहि) धारयामि युष्माकं मध्ये स्थापयामीति भावः, किं कृत्य ? युष्माकं जातिजानपदादीन् धर्म्मानालोक्य ॥ तत्र प्रमाणम् ॥ जातिजानपदान् धर्म्मान् श्रेणी धर्मांश्च धर्म्मवित्(१) ॥ समीक्ष्य कुलधर्म्मांश्च स्वधर्मं (२) प्रतिपाद-येत् ॥ मनु० अध्या० ८।४१ ॥ १ ॥ पुनर्वशिष्टसंहितायाम् ॥ देश-जातिधर्म्मकुलधर्म्मान् सर्वान् वैताननुप्रविश्य राजा चतुरो वर्णान् स्वधर्मे स्थापयेत् ॥ अध्या० २१ ॥ २ ॥ पुनर्य्याज्ञवल्क्यसंहिता-

(१) धर्म्मविदिति । धर्म्मवित्शब्देन धर्म्मवेत्तारमिति बोधव्यम् ॥ तल्लक्षणमाह । यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये ॥ निग्रहानुग्रहौ चोभौ स वै धर्म्मविदुच्यते ॥ इति महाभारतान्तर्गतशान्तिपर्वणि ॥ अध्या० १४।१७ ॥

(२) धर्म्ममिति । धर्म्म+धृ+मन् । शास्त्रविहितकर्म्मानुष्ठानजन्ये भाविफलसाधनभूते शुभादृष्टे श्रुतिस्मृतिभ्यामुदित यत् स धर्म्म इत्युक्ते श्रौते स्मार्ते कर्म्मणि । "विहितक्रियया साध्यो धर्म्मः पुंसां गुणो मतः" इत्युक्तकर्म्मजन्ये अदृष्टे च आत्मनि, देहधारणात्, जीवे, आचारे वस्तुगुणरूपे, स्वभावे, उपयायाम्, यागादौ, अहिंसायां, न्याये, उपनिषदि, यमे, सोमाध्यायिनि, सत्सङ्गे, धनुषि, ज्योतिषोक्ते लग्नात् नवमस्थाने च । दानादौ न० । इति शब्दस्तोमाभिधाने ॥ पुन अमरकोषेऽपि ॥ धर्म्माः पुण्ययमन्याये स्वभावाचारसोमपाः ॥ ३।१३८ ॥ पुनस्तत्रैव ॥ त्रयी धर्म्मस्तु तद्विधिः ॥

याम् ॥ कुलानि जातीः श्रेणीश्च गणान् जानपदांस्तथा ॥ स्वध-
र्मचलितान् राजा विनीय स्थापयेत् पथि ॥ अध्या० ८।४१ ॥३॥
३ ॥ पुनर्गौतमसंहितायाम् ॥ वर्णाश्रमांश्च न्यायतोऽभिरक्षेच्चलत-
श्चैतान् स्वधर्म्मे स्थापयेत् ॥ अध्या० ११ ॥४॥ यदा स्वधर्म्मेति
ज्ञात्वा ॥ तत्र प्रमाणम् ॥ धर्म्मस्य ब्राह्मणो मूलमग्रं राजन्य
उच्यते ॥ मनु० अध्या० ११।८३ ॥१॥ पुनः पराशरसंहितायाम् ॥
क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रचण्डवत् ॥ विजित्य पर-
सैन्यानि क्षितिं धर्म्मेण पालयेत् ॥ अध्या० १।५६ ॥२॥ पुनर्महा-
भारतान्तर्गतशान्तिपर्वणि ॥ कृतं त्रेता द्वापरश्च कलिश्च भरत-
र्षभ ! ॥ राजा वृत्तानि सर्वाणि राजैव युगमुच्यते ॥ चातुर्वर्ण्यं
तदा वेदाश्चातुराश्रम्यमेव च ॥ सर्वं प्रमुह्यते ह्येतद्यदा राजा प्रमा-
द्यति ॥ अग्निस्त्रेतात्रयीविद्या यज्ञाश्च सह दक्षिणाः ॥ सर्वं एव
प्रमाद्यन्ति यदा राजा प्रमाद्यति ॥ राजा कर्त्ता हि भूतानां
राजा चैव विनाशकः ॥ धर्म्मात्मा यः सकर्त्ता स्यादधर्म्मात्मा विना-
शकः ॥ अध्या० ९१।९ ॥ पुनस्तत्रैव युधि० प्र० वामदेव० । धर्म्म-
मेवानुवर्त्तस्व न धर्म्माद्विद्यते परम् ॥ धर्म्मे स्थिता हि राजानो ज-
यन्ति पृथिवीमिमाम् ॥ ९२।६ ॥ (प्रश्नः)कतमं धर्मं स्थापयामि ? ॥
(उत्तरम्) वर्णाश्रमाणां स्वधर्म्ममिति ॥ तत्र प्रमाणम् ॥ वरं
स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः ॥ परधर्मेण जीवन् हि
सद्यः पतति जातितः ॥ मनु० अध्या० १०।९७ ॥१॥ पुनर्हारीत-
संहितायाम् ॥ यो यस्याभिहितो धर्मः स तु तस्य तथैव च ॥
तस्मात् स्वधर्मं कुर्वीत द्विजो नित्यमनापदि ॥ वर्णाश्चत्वारो
राजेन्द्र ! चत्वारश्चापि चाश्रमाः ॥ स्वधर्मं ये तु तिष्ठन्ति ते यान्ति
परमां गतिम् । अध्या० ७।१७+१८ ॥२॥ पुनः कात्यायनसंहि-

लायाम् ॥ स्वशाखाश्रयमुत्सृज्य परशाखाश्रयञ्च यः ॥ कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥ यन्नाम्ना तं स्वशाखायां पारक्यमविरोधि यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ अध्या० २।२+३ ॥३॥ पुनर्दक्षसंहितायाम् ॥ यः स्वकर्म परित्यज्य यदन्यत् कुरुते द्विजः ॥ अज्ञानाद् यदि वा मोहात् स तेन पतितो भवेत् ॥ अध्या० २।३ ॥४॥ पुनर्मार्कण्डेयपुराणे ॥ स्ववर्णधर्मात् संसिद्धिं नरः प्राप्नोति निश्चितः ॥ प्रयाति नरकं प्रेत्य प्रतिषिद्धनिषेवनात् ॥ अध्या० २८।९ ॥५॥ (प्रश्नः) धर्मस्य किम्प्रयोजनम् ?॥ (उत्तरम्) धर्मादेव भूतानामैहिकपारलौकिकसुखं राष्ट्रनिरुपद्रवत्वम् वा भवति ॥ तत्र प्रमाणम्॥ धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुश्चरं तस्माद्धर्मे रमन्ते ॥ इति तैत्तिरी० आरण्य० प्रपा० १०। अनु० ६१ ॥ पुनस्तत्रैव ॥ धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदन्ति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मे रमन्ते ॥ १ ॥ न क्लेशेन विना द्रव्यं द्रव्यहीने कुतः क्रिया ॥ क्रियाहीने न धर्मः स्याद्धर्महीने कुतः सुखम् ॥ सुखं वाञ्छन्ति सर्वे हि तच्च धर्मसमुद्भवम् ॥ तस्माद्धर्मः सदा कार्य्यः सर्ववर्णैः प्रयत्नतः ॥ इति दक्षसंहितायाम् ॥ अध्या० ३।२३+२४ ॥१॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ॥ यत् स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ॥ अध्या० १०९।११ ॥ पुनस्तत्रैव ॥ सदा धर्मफलं राज्यं सुखानि विविधानि च ॥ अध्या० २७०।२७ ॥ अनेनैव भूतानामैहिकपारलौकिकसुखाय स्वराज्येऽहिंसया शान्तिरेव प्रयोजनमिति सिद्धम् ॥ अथ सर्वैः मनुष्यैर्धर्म एवोपासनीय इति स्पष्टीक्रियते ॥ धर्मो विश्वस्य जगतः

प्रतिष्ठालोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमुपनुदति धर्मे
सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति ॥ इति नारायणोपनि-
षदि ॥ ७९ ॥ १ ॥ पुनर्मैत्रायणोपनिषदि ॥ अयं वाव खल्वस्य
प्रतिविधिर्भूतात्मनो यदेव विद्याधिगमस्य धर्मस्यानुचरणं स्वा-
श्रमेष्वानुक्रमणं स्वधर्म एव सर्वं धत्ते स्तम्भशाखेवेतराण्यनेनोर्द्ध्व-
भाग्भवत्यन्यथाऽधःपतत्येषः स धर्माभिभूतो यो वेदेषु न स्वध-
र्मातिक्रमेणाश्रमी भवत्याश्रमी भवत्याश्रमेष्वेवावस्थितस्तपस्वी चे-
त्युच्यते ॥ प्रपा० ३।२ ॥ २ ॥ पुनर्मानवधर्मशास्त्रे ॥ अर्थकामेष्व-
सक्तानां धर्मज्ञानं विधीयते ॥ अध्या० २।१३ ॥ पुनस्तत्रैव । ब्राह्मे
मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ॥ ४।९२ ॥ पुनस्तत्रैव ॥ धर्मं
शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः ॥ परलोकसहायार्थं सर्व-
भूतान्यपीडयन् ॥ नामुत्र हि सहायार्थं पितामाता च तिष्ठतः ॥
न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ एकः प्रजायते जन्तु
एक एव प्रलीयते ॥ एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ॥ विमुखा बान्धवा
यान्ति धर्मस्तमनुगच्छति ॥ तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनु-
याच्छनैः ॥ धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ४।२३८+
२४२ ॥ ३ ॥ पुनर्याज्ञवल्क्यसंहितायाम् ॥ ब्राह्मे मुहूर्ते उत्थाय
चिन्तयेदात्मनो हितम् ॥ धर्मार्थकामान् स्वे काले यथाशक्ति न
हापयेत् ॥ अध्या० १।११५ ॥ पुनस्तत्रैव ॥ कर्मणा मनसा वाचा
यत्नाद्धर्मं समाचरेत् ॥ १।१५५ ॥ पुनस्तत्रैव ॥ धर्मेणालब्धमीहेत
लब्धं यत्नेन पालयेत् ॥ पालितं वर्द्धयेन्नित्यं वृद्धं पात्रेषु (१)

---

(१) पात्रेष्विति – पात्रशब्देन योग्यपुरुषो बोधव्यः ॥ तस्य लक्षणमाह ॥ अक्रोधः स-
त्यवचनमहिंसा तप आर्ज्जवम् ॥ अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ यस्मि-

निक्षिपेत् ॥ १।३१७ ॥ ४ ॥ पुनर्व्याससंहितायाम् ॥ किं धनेन करिष्यन्ति देहिनोऽपि गतायुषः ॥ यद्वर्द्धयितुमिच्छन्तस्तच्छरीरमशाश्वतम् ॥ अशाश्वतानि गात्राणि विभवो नैव शाश्वतः ॥ नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः ॥ अध्या० ४।१८+१९ ॥५॥ पुनर्महानिर्वाणतन्त्रे ॥ विद्यामुपार्जयेद्बाल्ये धनं दारांश्च यौवने ॥ प्रौढ़े धर्माणि कर्माणि चतुर्थे प्रव्रजेत्सुधीः ॥ उल्ला० ८।१६ ॥६॥ पुनर्महाभारतान्तर्गत आदिपर्वणि ॥ अधर्मो वै महानस्तु वने वा मरणं मम ॥ शरीरस्य विनाशेन धर्म एव विशिष्यते ॥ अध्या० २१५।२० ॥ पुनस्तत्रैव शान्तिपर्वणि ॥ यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः ॥ अध्या० ५९।२९ ॥ ७ ॥ पुनर्वाल्मीकीयरामायणे अयोध्याकाण्डे रामवाक्यम् ॥ धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ॥ धर्मसंश्रितमप्येतत् पितुर्वचनमुत्तमम् ॥ स० २१। ४१ ॥ ८ ॥ पुनर्मार्कण्डेय पुराणे मदालसां प्रति अलर्कवाक्यम् ॥ ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चापि चिन्तयेत् ॥ अध्या० ३३। १६ ॥ ९ ॥ पुनर्देवीपुराणे नारदं प्रति सनत्कुमारवाक्यम् ॥ धर्मः प्रयत्नतः कार्य्यो योगिनान्तु विशेषतः ॥ नास्ति धर्मादृते योग इति योगविदो विदुः ॥ अध्या० १० ॥१०॥ अनेन मनुष्यैर्धर्मोपासनीय इति सिद्धम् ॥ (प्रश्नः) एतदार्य्यावर्त्तदेशेषु अस्मिन् काले नानापथप्रचारकाः धर्मस्याचार्य्याः प्रवर्त्तन्ते तेषां धर्माणां मध्येऽस्माभिः किं धर्ममुपासनीयम् ? ॥ (उत्तरम्) यत्पिता प्रपितामहादिभिः

---

श्रेतानि दृश्यन्ते न चाकार्य्याणि भारत ! ॥ स्वभावतो निविष्टानि तत् पात्रं मानमर्हति ॥ इति महा० भार० अनुशा० पर्व० युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ अध्या० ३७।८+९ ॥ पुनस्तत्रैव दानपात्रस्य लक्षणमाह ॥ साङ्गांश्च चतुरो वेदानधीते यो विजर्षभः ! ॥ षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥ ये त्वं गुणजातीयास्तेभ्यो दत्तं महत्फलम् ॥ अध्या० २२।२६×२७ ॥

स्वीकृतम् ॥ तत्र प्रमाणम् ॥ येनास्य पितरो याता येन याता पितामहाः ॥ तेन यायात्सतां मार्गन्तेन गच्छन्नरिष्यते ॥ मनु० अध्या० ४।१७८ ॥ १ ॥ पुनर्महाभारतान्तर्गतवनपर्वणि ॥ तर्कोऽप्रतिष्ठा श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम् ॥ धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ अध्या० ३१२।११५ ॥ २ ॥ (प्रश्नः) किमत्रसन्मार्गप्रमाणम् ? ॥ (उत्तरम्) वेद एव कृतस्तदनुकूलतोऽन्यान्यपि शास्त्राणि प्रमाणानि भवन्ति तत्र प्रमाणम् ॥ धर्मजिज्ञासमानानां प्रमाणं परमं श्रुतिः (१) ॥ मनु० अध्या० २।१३ ॥ पुनस्तत्रैव ॥ श्रुतिस्मृत्यु(२)दितं धर्ममनुतिष्ठन्हि मानवः ॥ इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ २।९॥ पुनस्तत्रैव ॥ वेदोऽखिलं धर्ममूलं स्मृतिशीले च तद्विदाम् ॥ आचार(३)श्चैव साधूनामात्मनस्तुष्टिरेव च ॥ २।६ ॥ पुन-

---

(१) श्रुतिरिति — श्रुतिस्तु वेदो विज्ञेयः० ॥ मनु० २।१० ॥ कस्माद्वेद इत्युच्यते ? । विदिताखिलशास्त्रार्थसर्वधर्मनिरूपणात् ॥ दर्शनानां प्रमाणत्वाद्वेद इत्यभिधीयते ॥ इति कुलार्णवतन्त्रे सप्तदशोल्लासे ॥ अथ वेदस्य लक्षणमाह ॥ विधिर्विधेयस्तर्कश्च वेदः ॥ इति पारस्करगृह्यसूत्रे ॥ कण्डि० ६ । सू० ५ ॥ "भाष्यम् ॥ वेदवाक्येषु त्रीणि वाक्यानि सन्ति । विधिर्विधेयस्तर्क इति । तत्र कार्य्यस्य करणाय यदाज्ञा सा विधिः । करणीयकार्य्यं यत्तद्विधेयम्, वयम् ब्राह्मणा अस्माभिरिदम् कार्य्यं करणीयमिति धर्मयुक्तिप्रमाणानुसारेण यन्निश्चयात्मिकाविद्वत्ता बुद्धिस्तत्तर्कः । यथा अहरहःसन्ध्यामुपासीतेति वेदवाक्यम् । तत्राहरहः सन्ध्यामुपासीतेति विधिः, अस्मिन् वाक्ये सन्ध्याया उपासनम् विधेयम् । वयम् द्विजातयस्तेनास्माभिः सन्ध्योपासनकर्त्तव्यमिति निश्चयात्मिकाबुद्धिस्तत्तर्क इति भावः ॥

(२) स्मृतिरिति — धर्मशास्त्रन्तु वै स्मृतिः ॥ मनु० २।१० ॥ कस्मात् स्मृतिरित्युच्यते ? । स्मरणाद्वै निमित्तानां धर्माधर्मनिरूपणात् ॥ तिमिरोत्पाटनाद्देवि ! स्मृतिरित्यभिधीयते ॥ कुला० तं० उल्ला० १७ ॥

(३) आचार इति । आचारशब्देन शौचाचारादिव्यवहार इति बोध्यम्, तस्य लक्षणमाह ॥ पुरीषं यदि वा मूत्रं येन कुर्वन्ति मानवाः ॥ राजमार्गे गवां मध्ये

स्तत्रैव ॥ वेदः स्मृति सदाचारः (१) स्वस्य च प्रियमात्मनः ॥ एतच्चतुर्विधं प्राहुस्साक्षाद्धर्मस्य लक्षणम् ॥ २।१२ ॥ पुनस्तत्रैव ॥ एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः ॥ स विज्ञेयः परो धर्मो नाज्ञानमुदितोऽयुतैः ॥ १२।११३ ॥ पुनस्तत्रैव ॥ यं शिष्टा (२) ब्राह्मणा ब्रूयः स धर्मः स्यादशङ्कितः ॥ १२।१०८ ॥१॥ पुनर्याज्ञवल्क्यसंहितायाम् ॥ श्रुतिस्मृतिसदाचारः स्वस्य च प्रियमात्मनः ॥ सम्यक् सङ्कल्पजो कामो धर्ममूलमिदं स्मृतम् ॥ अध्या० १।७ ॥ २ ॥ पुनः पराशरसंहितायाम् ॥ धर्मशास्त्ररथारूढा वेदखड्ग[गायत्रीमन्त्रम्] धरा द्विजाः ॥ क्रीडार्थमपि यद् ब्रूयुः स धर्मः परमः

---

वान्यमध्ये च ते शुभाः ॥ शौचमावश्यकं कृत्वा देवतानाञ्च तर्पणम् ॥ धर्ममाङ्गमनुष्याणामुपस्पृश्य नदीं भवेत् ॥ सूर्यं सदोपतिष्ठेत न च सूर्योदये स्वपेत् ॥ सायं प्रातर्जपेत् संध्यां [गायत्रीं] तिष्ठन् पूर्वां तथोत्तरान् ॥ पञ्चार्द्रो भोजनं भुञ्जात् प्राङ्मुखो मौनमास्थितः ॥ न निन्द्यादन्न भक्ष्यांश्च स्वादु स्वादु च भक्षयेत् ॥ चार्द्रपाणिः समुत्तिष्ठेत् नार्द्रपादः स्वपेन्निशि ॥ देवर्षिनारदप्राह एतदाचारलक्षणम् ॥ इति महाभारतान्तर्गत शान्तिपर्वणि ॥ अध्या० १९३।२+७ ॥

(१) सदाचारमिति – सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ॥ तं देवनिर्मितं देशमार्यावर्त्तम्प्रचक्षते ॥ तस्मिन्देशे य आचारः पारंपर्य्यक्रमागतः ॥ वर्णानां सान्तरालानां स सदाचार उच्यते ॥ मनु० अध्या० २।१७+१८ ॥ अथ सदाचारस्य फलाफलमाह ॥ तत्र मानवधर्म्मशास्त्रे ॥ आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ॥ आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ दुराचारो हि पुरुषो लोके भवति निन्दितः ॥ दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ॥ श्रद्दधानोऽनसूयश्च शतम्वर्षाणि जीवति ॥ अध्या० ४।१५६+१५८ ॥

(२) शिष्टेति – शिष्ट त्रि० शास-क्त। शान्ते, वेदवाक्ये विश्वासकारके, सुबोधेति शब्दस्तोममहानिधौ । तस्य लक्षणमाह ॥ तत्र मानवधर्म्मशास्त्रे ॥ धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ॥ ते शिष्टा ब्राह्मणाज्ञेयाः श्रुतिप्रत्यक्षहेतवे ॥ अध्या० १२।१०९ ॥ पुनर्महाभारतान्तर्गतवनपर्वणि ॥ सर्वपूज्यश्रुतधनास्तथैव च तपस्विनः ॥ सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसम्मताः ॥ अध्या० २०६।८८ ॥

स्मृतः ॥ अध्या०८।२२॥२॥ पुनस्तत्रैव ॥ चत्वारो वा त्रयो वापि
यद् ब्रूयुर्वेदपारगाः ॥ स धर्म इति विज्ञेयो नेतरस्तु सहस्रशः ॥
८।१५॥४॥ पुनर्गौतमसंहितायाम् ॥ वेदो धर्ममूलं तद्विदाञ्च स्मृति-
शीले दृष्टी ॥ अध्या०१।सू०१॥ पुनस्तत्रैव ॥ वेदो धर्मशास्त्राण्य(१)-
ङ्गान्युपवेदाः (२) पुराणं (३) देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः
प्रमाणम् ॥ अध्या० ११ ॥४॥ पुनर्वशिष्टसंहितायाम् ॥ अथातः पुरु-
षनिःश्रेयसार्थं धर्मजिज्ञासा । ज्ञात्वा चानुतिष्ठन् धार्मिकः प्रशस्य
तमो भवति । लोके प्रेत्य वा विहितो धर्मः । तदलाभे शिष्टा-
चारः प्रमाणम् । दक्षिणेन हिमवत उत्तरेण विन्ध्यस्य ये धर्मा
ये चाचारास्ते सर्वे प्रत्येतव्या न त्वन्ये प्रतिलोमकल्पधर्माः ॥ अध्या०
१ ॥ पुनस्तत्रैव ॥ त्रैविद्य (४) वृद्धायं ब्रूयुर्धर्मं धर्मविदो जनाः ॥

---

(१) अङ्गानीति – अङ्गशब्देन वेदाङ्गानीति बोधव्यम् ॥ तस्य लक्षणमाह ॥ शिक्षा कल्पं
व्याकरणं निरुक्तं छन्दो ज्योतिषम् ॥ षडङ्गानि भवन्त्येते तदुपाङ्गानि च तच्छृणु ॥ प्रतिपद-
मनुपदं छन्दो भाषा मीमांसा तथैव च ॥ न्यायतर्कसमायुक्ता उपाङ्गा परिकीर्त्तिताः ॥
इति देवीपुराणे० अध्या० १०७ ॥

(२) उपवेदमिति – उपवेदमाह ॥ सर्वेषामेव वेदानामुपवेद शृणुष्व त ॥ ऋग्वेदस्या-
युर्वेदो यजुर्वेदे धनुस्तथा ॥ सामवेदस्य गान्धर्वं अर्थशास्त्रण्यथर्वणे ॥ इति देवीपुराणे ।
अध्या० १०७ ॥

(३) पुराणमिति – पुराणशब्देन प्राचीनमिति बोधव्यम् । यद्वा अष्टादशपुराणम्
व्यासोक्तशास्त्रेति बोधव्यम् ॥ तस्य लक्षणमाह ॥ सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि
च ॥ वंशानुचरितञ्चैव पुराणं पञ्च लक्षणम् ॥ पुनर्गायत्रीतन्त्रे ॥ पुराशब्दप्राची वाचीणश्च
गायत्रीवाचकः ॥ पुराप्राचीनवृत्तान्तं पापपुण्यसमन्वितम् ॥ प्राप्नोति श्रवणात् पुण्यं श्रव-
णात् पापनाशनम् ॥ अतोऽत्र कथ्यते देवि ! पुराणं ब्रह्मसम्मितम् ॥ पट० १ ॥ कस्मात्
पुराण इत्युच्यते ? । पुरा पुण्यादि कथनाद्राक्षसादि निवारणात् ॥ नवतत्त्वादिकथनात्
पुराण इति कथ्यते ॥ कुला० तं० उल्ला० १७ ॥

(४) त्रैविद्येति – त्रैविद्यशब्देन वेदत्रयीति बोधव्यम् ॥

पवने पावने चैव स धर्म्मो नात्र संशयः ॥ प० १ ॥५॥ पुनश्च हनीलतन्त्रे ॥ वैदिकप्रतिपाद्यस्तु अर्थो धर्मः प्रकीर्त्तितः ॥ विपरीतं महेशानि ! अधर्म्मो भवति प्रिये ! ॥ पट० ४ ॥६॥ पुनर्महाभारतान्तर्गत वनपर्वणि ॥ वेदोक्तःपरमो धर्मो धर्मशास्त्रेषु चापरः ॥ शिष्टाचारश्च शिष्टानां त्रिविधं धर्मलक्षणम् ॥ अध्या० २०६।८३ ॥ पुनस्तत्रैव ॥ श्रुतिप्रमाणो धर्मोऽयमिति वृद्धा(१)नुशासनम् ॥ २०७।२ ॥ पुनस्तत्रैव शान्तिपर्वणि ॥ दश वा वेदशास्त्रज्ञा त्रयो वा धर्मपाठकाः ॥ यद् ब्रूयुः कार्य्यं उत्पन्ने स धर्मो धर्मसंशये ॥ ३६।२१ । पुनस्तत्रैव युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ यश्च वेदः स वै धर्मो यश्च धर्मं स सत्पथः ॥ १२१।५७ ॥ पुनस्तत्रैव । सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ॥ चतुर्थमर्थमित्याहुः कवयो(२)धर्मलक्षणम् ॥ २५८।३ ॥ पुनस्तत्रैवानुशासनपर्वणि उमां प्रति महेश्वरवाक्यम् ॥ वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ॥ शिष्टाचीर्णोऽपरः प्रोक्तास्त्रयो धर्मः सनातनः ॥ १४१।६५।७ ॥ पुनाराजनीतौ ॥ धर्म्मशास्त्ररथारूढो वेदखड्ग(३)धरो द्विजः ॥ रक्षाकुरुष

---

(१) वृद्धेति—वृद्धशब्देन द्विजातीनां मध्ये ज्ञानवानेति बोधव्यम् ॥ तत्र महाभारतान्तर्गत आदिपर्वणि ययातिं प्रत्यष्टकवाक्यम् ॥ यो विद्यया तपसा संप्रवृद्धः स एव पूज्यो भवति द्विजानाम् ॥ अध्या० ८१२ ॥ पुनस्तत्रैव सभापर्वणि भीष्मवाक्यम् ॥ गुर्वर्थं द्रानतिक्रम्य हरिरर्च्चं तमो मतः ॥ ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ॥ वैश्यानां धान्यधनवान् शूद्राणामेव जन्मतः ॥ ३८।१७ ॥ पुनर्मैत्रेय्युपनिषदि ॥ धनवृद्धावयोवृद्धा विद्यावृद्धास्तथैव च ॥ ते सर्वे ज्ञानवृद्धस्य किंकराः शिष्य किंकराः ॥ अध्या० २।२४ ॥

(२) कविरिति—कविः मेधावी ॥ कविरिति मेधावी नाम सुपठितम् ॥ निघ० अ० ३ । खं० १५ ॥

(३) वेदखड्गधरोद्विज इति—यद्यपि क्षत्रियादतिरिक्त वर्णानां नास्तिशस्त्रग्रहणाऽधिकार स्तथाप्यापदि तिद्ग्रहणेन दोष इति दर्शयति ॥ शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो

सर्वेषां यावद्बुद्धिबलोदय: ॥ तेन धर्मसंचिन्तनार्थाय वेद एव, वा तदनुकूलत्वेनान्यशास्त्राणि प्रमाणानि भवन्तीति सिद्धम् ॥ अथ प्रमाणानां मध्ये परस्पर विरोधे सति किम्प्रमाणग्राह्यमित्याह ॥ श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ॥ तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा ॥ ब्राह्मणक्षत्रियविशस्त्रयो वर्णा द्विजातय: ॥ श्रुतिस्मृतिपुराणोक्तं धर्मयोग्यास्तु नेतरे ॥ इति व्याससंहिता-याम् ॥ अध्या० १।४+५ ॥ १ ॥ पुनर्देवीभागवतान्तर्गतभगवती-गीतायां हिमाचलं प्रति भगवतीवाक्यम् ॥ श्रुतिस्मृतिभ्यामु-दितं यत्स धर्म: प्रकीर्त्तित: ॥ अन्यशास्त्रेषु य: प्रोक्तो धर्मा-भास: स उच्यते ॥ सर्वज्ञात्सर्वशक्तेश्च मत्तो वेद: समुत्थित: ॥ अज्ञा-नस्य ममाभावादप्रमाणा न च श्रुति: ॥ स्मृतयश्च श्रुतेरर्थं गृहीत्वैव च निर्गता: ॥ मन्वादीनां स्मृतीनाञ्च (१) तत: प्रामाण्य-

---

यत्रोपरुध्यते ॥ द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते ॥ आत्मनश्च परित्राणे दाक्षिणा-
नाञ्च सङ्गरे ॥ स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति ॥ मनु० अध्या० ८।३४८+३४९ ॥
पुनस्तत्रैव ॥ न ब्राह्मणो वेदयति किञ्चिद्राजनि धर्मवित् ॥ स्ववीर्य्येणैव ताञ्छिष्यान्मानवा-
नपकारिण:॥ स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरम् ॥ तस्मात्स्वेनैव वीर्य्येण निगृह्णीया-
द्रीन्द्विज: ॥ श्रुतिरथर्वाङ्गिरसी: कुर्य्यादित्य विचारयन् ॥ वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्या-
दरिन्द्विज: ॥ क्षत्रियो बाहुवीर्य्येण तरेदापदमात्मन: ॥ धनेन वैश्य शूद्रौ तु जप होमैर्द्विजो-
त्तम:॥ अ०१०।३१+३४॥ पुन: शान्तिपर्वणि ॥ भवत्यधर्मो धर्मो हि धर्माऽधर्मावुभावपि ॥
कारणाद्देशकालस्य देशकाल: स तादृश: ॥ मैत्राक्रूराणि कुर्वन्ति जयन्ति स्वर्गमुत्तमम् ॥ धर्म्या
पापानि कुर्वाणा गच्छन्ति परमाङ्गतिम् ॥ ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्नदुष्यति ॥ आ-
त्मत्राणे वर्णदोषे दुर्दम्यं नियमेषु च ॥ अध्या० ७८।३२+३४ ॥ अनेन क्षत्रियानन्य तमैरपि
शस्त्रं धारणीयमिति सिद्धम् ॥

(१) मन्वादीनां स्मृतीनाञ्चेति – सर्वेषां स्मृतीनां मध्ये मनुरेव श्रेष्ठा तदानुकूलत्वाद-
न्यानि स्मृतय: प्रमाणानि भवन्ति । कस्मात् ? अज्ञानरोगग्रसितानां नृणां भेषज-
त्वात् ॥ तत्र प्रमाणम् ॥ यद्वै किञ्च मनुरवदत्तद्भेषजम् ॥ इति कृष्णयजु० कां० २
प्र० २। अ० १०। कां० २ ॥

सिध्यते॥ अन्येषां शास्त्रकर्तॄणामज्ञानप्रभवत्वत:॥ अज्ञानदोषदुष्टत्वात्तदुक्तेन प्रमाणता॥ तस्मान्मुमुक्षुधर्मार्थी सर्वथा वेदमाश्रयेत्॥ राजाज्ञा च यथा लोके हन्यते न कदाचन॥ सर्वेषां या ममाज्ञा सा श्रुतिस्त्याज्या कथं नृभि:॥ मदाज्ञा रक्षणार्थन्तु ब्रह्मक्षत्रियजातय:॥ मया सृष्टास्ततो ज्ञेयं रहस्यं मे श्रुतेर्वच:॥ स्कन्ध ७ अध्या० ३९।१५+२१॥ पुनस्तत्रैव। यो वेदधर्ममुत्सृज्य धर्ममन्यं समाश्रयेत्॥ राजाप्रवासयेद्देशान्निजादेता न धर्मिण:॥ ब्राह्मणैर्न च सम्भाष्या: पंक्तिग्राह्या न च द्विजै:॥ अन्यानि यानि शास्त्राणि लोकेस्मिन्विविधानि च॥ श्रुतिस्मृतिविरुद्धानि तामसान्येव सर्वश:॥ ३९।३५+२७॥ तेन प्रमाणानां परस्परविरोधे सति वेदानुकूलमेव प्रमाणम्॥ (प्रश्न:) तत्र को धर्म: ?॥ (उत्तरम्) चोदना लक्षणोऽर्थो धर्म:॥ "पू० मीमां० अ० १ पा० १ सू० २॥ १॥" यतोऽभ्युदय नि:श्रेय स सिद्धि: सधर्म:॥ "इति वैशेषिके॥ अ० १। पा० १। सू० २" पुनर्बृहन्नीलतन्त्रे शिववाक्यम्॥ वैदिकप्रतिपाद्यश्च अर्थो धर्म: प्रकीर्त्तित:॥ विपरीतं महेशानि! अधर्मो भवति प्रिये!॥ पट० ४॥ तेन वेदेन चोदित: प्रेरितोऽर्थस्स धर्म इति सिद्धम्॥ स सामान्यविशेषभेदेन द्विधा (प्रश्न:) कस्सामान्य धर्म: ?॥ (उत्तरम्) सत्यमहिंसादि दशलक्षणलक्षितो यद्धर्म: तत्सामान्यधर्म:॥ तत्र प्रमाणम्॥ चतुर्भिरपि चैवैते नित्यमाश्रमिभिर्द्विजै:॥ दशलक्षणको धर्म: सेवितव्य: प्रयत्नत:॥ धृति: क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रह:॥ धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥ दशलक्षणानि धर्मस्य ये विप्रा समधीयते॥ अधीत्य चानुवर्त्तन्ते ते यान्ति परमाङ्गतिम्॥ दशलक्षणकं धर्ममनुतिष्ठन्समाहित:॥ वेदान्तं विधिवच्छ्रुत्वा सन्य-

सेदन्तगो द्विजः ॥ मनु० अध्या० ६।९१+९४ ॥ पुनस्तत्रैव ॥ अ-
हिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ॥ एतं सामानिकं धर्मं
चातुर्वर्ण्ये ब्रवीन्मनुः ॥ १०।६३ ॥ १ ॥ पुनर्विष्णुसंहितायाम् ॥
क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ॥ अहिंसा गुरुशुश्रूषा-
तीर्थानुसारणं दया ॥ आर्ज्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ॥
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥ अध्या० २।७+८ ॥
२ ॥ पुनर्याज्ञवल्क्यसंहितायाम् ॥ अहिंसा सत्यमस्तेयं शौचमि-
न्द्रियनिग्रहः ॥ दानं दयादमः क्षान्तिः सर्वेषां धर्मसाधनम् ॥
अध्या० १।१२२ ॥ पुनस्तत्रैव ॥ इज्याचारदमाहिंसादानं स्वा-
ध्यायकर्म च ॥ अयन्तु परमो धर्मो यद् योगेनात्मदर्शनम् ॥ १।८
॥ ३ ॥ पुनर्लिखितसंहितायाम् ॥ अग्निहोत्रं तपः सत्यं वेदाना-
ञ्चैव पालनम् ॥ आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥ इष्टापूर्त्तौ
द्विजातीनां सामान्यो धर्मं उच्यते ॥ अध्या० १।५+६ ॥ ४ ॥
पुनर्म्महाभारतान्तर्गत वनपर्वणि ॥ इज्याध्ययनदानानि तपः
सत्यं क्षमा दमः ॥ अलोभमिति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥
१।७४ ॥ पुनस्तत्रैवानुशासनपर्वणि उमां प्रति महेश्वरवाक्यम् ॥
अहिंसा सत्य वचनम् सर्वभूतानुकम्पनम् ॥ शमो दानं यथाशक्ति-
र्गार्हस्थो धर्म्म उत्तमः ॥ परदारेष्वसंसक्तो न्यासस्त्रीपरिरक्षणम् ॥
अदत्तादानविरमो मधुमांसस्य वर्ज्जनम् ॥ एष पञ्चविधो धर्मो
बहुशाखासुखोदयः ॥ अध्या० १४१।२५+२६ ॥ ५ ॥ (प्रश्नः)
को विशेषो धर्मः ? ॥ (उत्तरम्) ब्राह्मणादिचतुर्वर्णानां ब्रह्मच-
र्य्यादिचतुराश्रमिणां वा धर्मो विशेषधर्मः ॥ यथा अहरहः स-
न्ध्यामुपासीत, अहरहरग्निहोत्रं कुर्य्यात् ॥ वेदमेव सदभ्यस्यत्त-
पस्तन् द्विजोत्तम इत्यादि वेदवाक्यानि द्विजातीनामधिकारभेदेन

विशेषधर्मः॥ (प्रश्नः) कस्माद्धर्म इत्युच्यते?॥ (उत्तरम्) सर्वेषां धार्य्यत्वात्॥ तत्र प्रमाणम्॥ धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः॥ यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः॥ इति महाभारतान्तर्गतकर्णपर्वणि अर्ज्जुनं प्रति कृष्णवाक्यम्॥ अध्या० ६९।५८॥ पुनस्तत्रैव शान्तिपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम्॥ धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः॥ यत् स्याद्धारणसंयुक्तं स धर्म इति निश्चयः॥ अध्या० १०९।१२॥१॥ पुनः वाल्मीकीयरामायणे उत्तरकाण्डे रामचन्द्रवाक्यम्॥ धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः॥ यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम्॥ धारणाद्विद्विषाञ्चैव धर्मेण रञ्जयन् प्रजाः॥ तस्माद्धारणमित्युक्तं स धर्ममिति निश्चयः॥ स० ७१।७+८॥२॥ (प्रश्नः) कस्मै प्रयोजनाय धर्मम् धारयामि?॥ (उत्तरम्) (देवस्य) व्यवहारिणः (सवितुः) व्यत्ययेन चतुर्थी तेनैश्वर्य्याय (यः) यो धर्मः (नः) अस्माकम् राज्ञाम् (धियः) बुद्धीः (प्रचोदयात्) युष्माकं मध्ये धर्मसंस्थापनाय प्रजारक्षणाय वा प्रेरयति॥ अथ राज्ञाम् प्रजारक्षणमेव श्रेष्ठधर्म इति स्पष्टीक्रियते॥ क्षत्रियस्य परो धर्मः प्रजानामेव पालनम्॥ निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते॥ मनु० अध्या० ७।१४४॥ पुनस्तत्रैव॥ सर्वतो धर्म षड्भागो राज्ञो भवति रक्षतः॥ अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः॥ यदधीते यद्यजते यद्ददाति यदर्चति॥ तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात्॥ रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन्॥ यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः॥ योऽरक्षन् बलिमादत्ते करं शुल्कंच पार्थिवः॥ प्रतिभागञ्च दण्डञ्च सद्यो नरकं व्रजेत्॥ अरक्षितारं राजानां बलिषड्भागहारिणाम्॥ तमाहुः सर्वलोकस्य समग्रमलहारकम्॥

अनपेक्षितमर्य्यादं नास्तिकं (१) वेदलब्धकम्॥ अरक्षितारमत्तारं नृपं विद्यादधोगतम्॥ ८।३०४+३०९॥ पुनस्तत्रैव॥ वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम्॥ वार्त्ता कर्म्मैव वैश्यस्य विशिष्टानि स्वकर्मसु॥ १०।८०॥ पुनस्तत्रैव॥ ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्॥ ११।२३५॥ १॥ पुनर्याज्ञवल्क्यसंहितायाम्॥ प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्॥ अध्या० १।११९॥२॥ पुनः शंखसंहितायाम्॥ क्षत्रियस्य विशेषेण प्रजानां परिपालनम्॥ अध्या० १।४॥ ३॥ तेन राज्ञां प्रजापालनमेव श्रेष्ठधर्म इति सिद्धम्॥ यद्वा भो ब्रह्मक्षत्रियादयः यद् व्यवहारिणामैश्वर्य्यप्रदं श्रेष्ठधर्मम् जातिजानपदानुसारेण युस्माकं मध्ये वयम् धीमहि स च श्रेष्ठधर्मोऽस्मान् राज्ञान् प्रजारक्षणादिधर्ममार्गेषु प्रेरयेत्॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रिती वर्णाश्रमधर्म्मस्थापना निरूपणं तृतीयप्रकरणम्॥ ३॥

—०—

अथ चतुर्थार्थमाह॥

अन्वयः॥ देवस्य तद्वरेण्यम् भर्गो धीमहि सवितुर्भूर्भुवःस्वर्यो नो धियः प्रचोदयात्॥ ४॥

पदार्थः॥ वयम् ब्राह्मणक्षत्रियवैश्यादयः (देवस्य)

---

(१) नास्तिकमिति—नास्तिकस्य लक्षणमाह॥ श्रुतिस्तु वेदो विज्ञेयो धर्म्मशास्त्रन्तु वै स्मृतिः॥ ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥ योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः॥ स साधुभिर्बहिः कार्य्यो नास्तिको वेदनिन्दकः॥ मनु० अध्या० २।१०+११॥ पुनरास्तिकस्य लक्षणमाह॥ श्रौते स्मार्त्ते च विश्वासो यस्तदास्तिक्यमुच्यतेति श्रीजाबालोपनिषदि॥ खं० २।६॥ पुनर्म्महाभारतान्तर्गतानुशासनपर्वणि॥ यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं [धर्म्मशास्त्र] वा मुनिभिः कृतम्॥ दूषयत्यनभिज्ञाय तं विद्याद् ब्रह्मघातिनम्॥ अध्या० २४।८॥

राज्ञः (तद्वरेण्यम्) तच्छ्रेष्ठम् स्वीकारयोग्यम् वा (भर्गः) पापभञ्जनहेतुभूतम् धर्म्मम् (धीमहि) धारयामः, [कथम्भूतस्य देवस्य राज्ञः?] (सवितुः) धर्म्ममार्गेषु प्रेरकस्य [पुनः कथम्भूतस्य देवस्य?] (भूर्भुवःस्वः) व्रतेनाग्निवायुसूर्य्यादिरूपधारकस्य (यः) यो राजधर्म्मः (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) यज्ञादि धर्म्ममार्गेषु प्रेरयति ॥ ४ ॥

भाष्यम् ॥ पूर्वोक्तगुणयुक्तस्य राज्ञः नूतनप्रजागणास्तस्याज्ञामङ्गीकृत्य राजानम् वदन्ति । भो राजन् ! वयम् ब्राह्मणक्षत्रियवैश्यादयः (देवस्य) राज्ञः ॥ तत्र प्रमाणम् ॥ यो देवः स देवतेति ॥ निरु० १।१५ ॥ क्षत्रं देवो देवता भवति ॥ गोपथ० ब्रा० पू० ४।१० ॥ पुनर्मानवधर्म्मशास्त्रे बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ॥ महती देवता ह्येषा नररूपेण तिष्ठति ॥ अध्या ७।८ ॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि ॥ राजा चरति चेद्धर्मं देवत्वाय प्रकल्पते॥ अध्या० ९०।४ ॥ पुनस्तत्रैव ॥ यमो राजा धार्मिकाणां मान्यता परमेश्वरः ॥ ९१।४२ ॥ पुनस्तत्रैव ॥ यथैवेन्द्रस्तथा राजा सम्पूज्यो भूतिमिच्छता ॥ अ० ६७।४ ॥ पुनस्तत्रैव ॥ इन्द्रो राजा यमो राजा धर्मो राजा तथैव च ॥ राजा बिभर्त्ति रूपाणि राज्ञा सर्वमिदं धृतम् ॥ ७५।२५ ॥ तेन देवशब्देन राजेति सिद्धम् ॥ (तत्) (वरेण्यम्) श्रेष्ठम् स्वीकारयोग्यम् वा (भर्गः) पापानाम् भञ्जनहेतुभूतम् तेजः स्वरूपम् धर्मम् (धीमहि) धारयामः (१) अथ राजाज्ञापालनीयेति स्पष्टीक्रियते ॥ यस्य प्रसादे पद्मास्ती-

(१) धीमहीति – धीमहिशब्देन स्वीकरोमीत्यभिप्रायः ॥

विजयश्च पराक्रमे ॥ मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥
तं यस्तु द्वेष्टि सम्मोहात्स विनश्यत्यसंशयम् ॥ तस्माद्धर्मं यमिष्टेषु
संव्यवस्येन्नराधिपः ॥ अनिष्टञ्चाप्यनिष्टेषु तद्धर्मं न विचालयेत् ॥
मनु० अध्या० ७।११+१२ ॥ १ ॥ पुनर्देवीभागवतान्तर्गतभग-
वतीगीतायां हिमाचलं प्रति भगवतीवाक्यम् ॥ राजाज्ञा च
यथालोके हन्यते न कदाचन ॥ स्क० ७ । अध्या० ३९।२० ॥ [क-
थम्भूतस्य देवस्य राज्ञः?] (सवितुः) धर्ममार्गेषु प्रेरकस्य ॥ तत्र प्रमा-
णम् ॥ यो ह्येव सविता स प्रजापतिः ॥ गो० ब्रा० पू० ५।२२ ॥
[पुनः कथम्भूतस्य देवस्य राज्ञः?](भूर्भुवःस्वः) व्रतेनाग्निवायुरूप-
धारकस्य ॥ तत्र प्रमाणम्॥ भूरिति अग्निः भुवरिति वायुः॥ सुवरि-
त्यादित्यः ॥ तैत्तिरीयोपनिषदि ॥ अनु० ५।१ ॥ तेन भूर्भुवःस्वः
शब्देन अग्निवायुसूर्य्या ग्राह्याः ॥ पुनर्मानवधर्मशास्त्रे ॥ सोऽग्नि-
र्भवति वायुश्च सोऽर्कः सोमः सधर्मराट् ॥ सकुवेरः सवरुणः स
महेन्द्रः प्रभावतः ॥ अध्या० ७।७ ॥ पुनस्तत्रैव ॥ इन्द्रस्यार्कस्य
वायोश्च यमस्य वरुणस्य च ॥ चन्द्रस्याग्नेः पृथिव्याश्च तेजो वृत्तं नृ-
पश्चरेत् ॥ अध्या० ९।३०३ ॥१॥ पुनर्वाल्मीकीयरामायणे आरण्य-
काण्डे ॥ पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ॥ अग्नेरिन्द्रस्य
सोमस्य यमस्य वरुणस्य च ॥ स० ३९।११ ॥ अतएव भूर्भुवःस्वः-
शब्देनाग्निवायुसूर्य्यादिव्रतधारकत्वं राज्ञः स्वरूपमिति गृ-
ह्यते ॥ (प्रश्नः) कस्माद्राजा अग्निर्वायुः सूर्य्य इत्युच्यते ? ॥ ( उत्त-
रम्) स्वप्रतापेन दुष्टानां पापकर्मणां दण्डप्रदानत्वात्, स्वधर्मेण
प्रजाः पालयित्वा तेषां हृदयेषु प्रविष्टत्वात्, स्वराष्ट्रात्करहारक-
त्वाद्राजा अग्निर्वायुः सूर्य्य इत्युच्यते ॥ तत्र प्रमाणम् ॥ प्रतापयुक्त-
स्तेजस्वी नित्यं स्यात्पापकर्मसु ॥ दुष्टसामन्तहिंस्रश्च तदाग्नेयं

व्रतसमृतम् ॥ मनु० । ८।३१० ॥ पुनस्तत्रैव ॥ प्रविश्य सर्वभूतानि यथा चरति मारुतः ॥ तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ ८।३०६ ॥ पुनस्तत्रैव ॥ अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः ॥ तथा हरेत्करं राष्ट्रान्नित्यकर्मव्रतं हितत् ॥ ८।३०५ ॥१॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि ॥ यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा ॥ मिथ्योपचरितो राजा तदा भवति पावकः ॥ यदा पश्यति चारेण सर्वं भूतानि भूमिपः ॥ क्षेमञ्च कृत्वा व्रजति तदा भवति भास्करः ॥ अध्या० ६८।४२ + ४२ ॥२॥ (प्रश्नः) किं कृत्य राजधर्मं धीमहि ? ॥ (उत्तरम्) स्वधर्माद्राजधर्मात्किञ्चिद्विरोधो (१) नास्तीत्यालोक्य ॥ तत्र प्रमाणम् ॥ निजधर्माविरोधेन यस्तु सामरिको भवेत् ॥ सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ इति याज्ञवल्क्यसंहितायाम् ॥ अध्या० २।१८६ ॥ यदा स्वशक्तिकालञ्च ज्ञात्वा ॥ तत्र प्रमाणम् ॥ देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ॥ उपपत्तिमवस्थाञ्च ज्ञात्वा धर्मं समाचरेत् ॥ इति यमसंहितायाम् ॥ अध्या० १।५१ ॥१॥ पुनर्देवीपुराणे ॥ यथादेशं यथाकालं यथाद्रव्यं यथाक्रमम् ॥ यथोपदिष्टः कर्त्तव्यो धर्मो धर्मफलार्थिभिः ॥ अध्या० १० ॥ २ ॥ (प्रश्नः) धर्मविरुद्धाचरणानामधार्मिकानां का गतिर्भवति ? ॥ (उत्तरम्) स्वधर्मपतितानामाचारधर्मभ्रष्टानां, राजाज्ञामुल्लङ्घकारिणां मनुष्याणां लोकेषु निन्दादिदुःखप्राप्तिर्भवति, प्रेत्य च नरकं गच्छन्ति ॥ तत्र प्रमाणम् ॥

---

(१) विरोध इति — स्वधर्माद्विरुद्धराजधर्मो न धर्मः किन्त्वधर्मेति ॥ तत्र प्रमाणम् ॥ धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत् ॥ अविरोधात्तु यो धर्मः स धर्मः सत्यविक्रम ॥ विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ॥ न बाधा विद्यते यत्र तं धर्मं सुसमाचरेत् ॥ महा० भा० वन० प० अध्या० २०६।८३ ॥

अधार्मिको नरो यो हि तस्य चाप्यनृतन्धनम्॥ हिंसारतश्च यो नित्यं नेहासौ सुखमेधते॥ नसीदन्नापि धर्मेण मनोऽधर्मे निवेशयेत्॥ अधार्मिकाणाम्पापानामाशु पश्यन्विपर्य्ययम्॥ नाधर्मश्चरितो लोके सद्यः फलति गौरिव॥ शनैरावर्त्तमानस्तु कर्त्तुर्मूलानि कृन्तति॥ यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु॥ न त्वेवन्तु कृतोऽधर्मः कर्त्तुर्भवति निष्फलः॥ मनु०॥ अध्या० ४।१७० +१७२। पुनस्तत्रैव॥ यत्र धर्मो ह्यधर्मेण सत्यञ्चानृतेन च॥ हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः॥ धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः॥ तस्माद्धर्मो न हन्तव्यो मानो धर्मो हतोऽवधीत्॥ वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम्॥ वृषलं तम्विदुर्देवास्तस्माद्धर्मं न लोपयेत्॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः॥ शरीरेण समं नाशं सर्वमन्यद्धि गच्छति॥ अध्या० ८।१४+१७॥ पुनस्तत्रैव॥ तौ धर्म्मम्पश्यतस्तस्य पापञ्चातन्द्रितौ सह॥ याभ्यां प्राप्नोति सम्पृक्तः प्रेत्येह च सुखासुखम्॥ यद्याचरति धर्मं स प्रायशो धर्ममल्पशः॥ तैरेव चावृतो भूतैः स्वर्गे सुखमुपश्नुते॥ यदि तु प्रायशोऽधर्मं सेवते धर्ममल्पशः॥ तैर्भूतैः संपरित्यक्तो यामीः प्राप्नोति यातनाः॥ यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः॥ तान्येव पञ्चभूतानि पुनरप्येति भागशः॥ एता दृष्ट्वास्य जीवस्य गतिः स्वेनैव चेतसा॥ धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः॥ अध्या० १२।१९+२३॥१॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि॥ यस्मिन्धर्मो विराजेत तं राजानं प्रचक्षते॥ यस्मिन् विलीयते धर्मस्तं देवा वृषलं विदुः॥ वृषो हि भगवान् धर्मो यस्तस्य कुरुते ह्यलम्॥ वृषलं तं विदुर्देवास्तस्माद्धर्मं विवर्जयेत्॥ अध्या० ९०।१५+१६॥ पुनस्तत्रैवानुशासनपर्वणि

इमाल्हेश्वरसम्वादे ॥ अधर्मं धर्ममित्याहुर्ये च मोहवशंगताः ॥ अव्रता नष्टमर्य्यादास्ते प्रोक्ता ब्रह्मराक्षसाः ॥ अध्या० १४५।६ ॥२॥ अतोऽधर्मस्य फलं सुखमेव सिद्धम् ॥ (यः) यो राजधर्मः (नः) अस्माकं द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) यज्ञादिधर्म्म-मार्गेषु प्रेरयति ॥ यद्वा ॥ यत् धर्म्ममार्गप्रेरकस्याग्निवाय्वादि-त्यव्रतचारिणो राज्ञः श्रेष्ठम् धर्मं वयम् स्वीकरोमि तत् तेज-स्वरूपः राजधर्मोऽस्माकं द्विजातीनां बुद्धीः यज्ञादिधर्म्मकार्य्येषु प्रेरयेत् ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रिती राजधर्म्मोऽनुगमननिरूपणं चतुर्थप्रकरणम् ॥

—०—

अथ पञ्चमार्थमाह ॥

ब्रह्मराजन्योः पितापुत्र इव सम्बन्धस्तदेव भाष्यद्वयैः स्पष्टी-क्रियते ॥ राजा ब्राह्ममुहूर्त्ते उत्थाय सन्ध्योपासनादि नित्यकर्म्म कृत्वा स्व, राष्ट्रयोः कल्याणार्थं विदुषो ब्राह्मणान् चिन्तयति ॥

अन्वयः ॥ देवस्य तद्वरेण्यम् भर्गो धीमहि सवितु-र्यो नो धियः प्रचोदयात् ॥ ५ ॥

पदार्थः ॥ (देवस्य) ब्राह्मणस्य (तत्) (वरेण्यम्) सेवनीयम् श्रेष्ठंवा (भर्गः) ब्रह्मवर्च्चस्युक्तं स्वरूपम् तेजो वा (धीमहि) ध्यायेम [कस्मै प्रयोजनाय ?] (स-वितुः) सवित्रे यज्ञाय (यः) यो ब्रह्मणः (नः) अस्मा-

कम् राज्ञाम् (धियः) बुद्धीः ( प्रचोदयात् ) यज्ञादि-राजकार्य्येषु प्रेरयति ॥ ५ ॥

भाष्यम् ॥ वयम् राजानः (देवस्य) ब्राह्मणस्य ॥ तत्र प्रमाणम् ॥ विद्वाᳬंसो हि देवः, असुरा प्राणपोषका मोक्षोपायरहिताः ॥ शत० ब्रा० ३।७।३।१० ॥ पुनस्तत्रैव ॥ सत्यं देवा अनृतं मनुष्याः ॥ श० ॥ १।१।२।१७ ॥ पुनर्म्मानवधर्म्मशास्त्रे ॥ ब्राह्मणः सम्भवेनैव-देवानामपि दैवतम् ॥ अध्या० ११।८४॥१॥ पुनः पाराशरसंहिता-याम् ॥ ब्राह्मणा यानि भाषन्ते भाषन्ते तानि देवताः ॥ सर्वदेव-मयो विप्रो (१) न तद्वचनमन्यथा ॥ अध्या० ६।६१॥२॥ पुनर्व्यास-संहितायाम् ॥ ब्राह्मणः स भवेच्चैव देवानामपि दैवतम् ॥ प्रत्यक्षञ्चैव लोकस्य ब्रह्म तेजो हि कारणम् ॥ अध्या० ४।४७॥३॥ पुनरत्रि-संहितायाम् ॥ संध्या (२) स्नानं (३) जपं होमं (४) देवता नित्यपूज-नम् ॥ आतिथ्यं वैश्वदेवञ्च देवब्राह्मण (५) उच्यते ॥ अध्या० १। ३६५॥४॥ पुनर्म्महाभारतान्तर्गतशान्तिपर्वणि भीष्मवाक्यम् ॥ ऋग्-

---

(१) विप्र इति—विप्रस्य लक्षणमाह । यः स्याद्दान्तः सोमपश्चार्य्यशीलः सानुक्रोशः सर्वसही निराशीः ॥ ऋजुर्म्मृदुरनृशंसः क्षमावान् स वै विप्रो नेतरः पापकर्मा ॥ इति महा० भा० शान्तिपर्वणि युधि० प्र० भीष्मवाक्यम् ॥ अध्या० ६३।८॥१॥ पुनः ॥ विप्रो मेधा-विनाम सुपठितम् ॥ निघ० । अध्या० ३ खं० १५ ॥—

(२) सन्ध्येति—गायत्र्युपासनम् ॥

(३) स्नानमिति—जलभस्मादिस्नानम् ॥

(४) देवतेति—देवताशब्देन माता च पितेति वा विद्वान् इति बोद्धव्यम् ।

(५) ब्राह्मणमिति—ब्राह्मणस्य लक्षणमाह । तत्र महाभारतान्तर्गतशान्तिपर्वणि भरद्वाजं प्रति भृगुवाक्यम् ॥ शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ॥ नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥ पुनः॥ सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा ॥ तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ अध्या० १८९।२+४॥ पुनस्तत्रैव ॥ ब्राह्मणेषु तपोधर्म्मः स नित्यो वेदनिश्चितः ॥ सत् प्रमाणं ब्राह्मणानां शाश्वतं भरतर्षभ ॥ अध्या० ६०।४२ ॥

यजुः सामवित् पूज्यो नित्यं स्याद्देववद् (१) द्विजः ॥ अध्या० ६०। ४३।५॥ तेन देवशब्देन विद्वान् ब्राह्मण इति सिद्धम् ॥ (तत्) तदेव (वरेण्यम्) सेवनीयम् श्रेष्ठं वा (भर्गः) पापभर्ज्जनहेतुम् तम् ब्रह्मवर्च्चस (२) युक्तशरीरम्, ब्रह्मतेजो (३) वीर्य्यं वा (धीमहि) ध्यायामः ॥ अथ राजभिर्ब्राह्मणाःसदैवोपासनीया इति स्पष्टीक्रियते ॥ ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः ॥ त्रैविद्यवृद्धान् विदुषस्तिष्ठेत्तेषाञ्च शासने ॥ वृद्धांश्च नित्यं सेवेत विप्रान्वेदविदः शुचीन् ॥ वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥ मनु० अध्या० ७।३७+३८॥१॥ पुनर्म्महाभारतन्तर्गतशान्तिपर्वणि भीष्मवाक्यम् ॥ धर्म्मस्य ब्राह्मणो योनिस्तस्मात्तान् पूजयेत् सदा ॥ अध्या० ८०।२२॥ पुनस्तत्रैव काश्यपवाक्यम् ॥ अग्रं हि ब्रह्मणा प्रोक्तं सर्वस्यैवेह धर्म्मतः ॥ पूर्वं हि ब्रह्मणः सृष्टिरिति ब्रह्मविदो विदुः ॥ ज्येष्ठेनाभिजनेनास्य प्राप्तं पूर्वं यदुत्तरम् ॥ तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक्॥ सर्वं श्रेष्ठं विशिष्टञ्च निवेद्यं तस्य धर्म्मतः ॥ अवश्यमेव कर्त्तव्यं राज्ञा बलवता हि सः ॥ ब्रह्म वर्द्धयति क्षत्रं क्षत्रतो ब्रह्म वर्द्धते ॥

---

(१) देववदिति —देववत् ब्रह्मवत्, तस्य लक्षणमाह ॥ विद्यालक्षणसम्पन्नाः सर्वत्र समदर्शिनः ॥ एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्त्तिताः महा० भा० शान्ति० प० अध्या० ७६।२॥ युधिष्ठिरं प्रति भीष्मवाक्यम् ॥

(२) ब्रह्मवर्च्चस इति—जायमानोह वै ब्राह्मणः सप्तेन्द्रियाण्यभिजायन्ते, ब्रह्मवर्च्चसञ्च, यशश्च, स्वप्नञ्च, क्रोधञ्च, श्लाघ्यञ्च, रूपञ्च पुण्यमेव गन्धसप्तममिति गोपथब्राह्मणे ॥ पू० २।२ ॥

(३) ब्रह्मतेजइति—ब्राह्मणानामपि शरीरे तेजो भवतीति स्पष्टीक्रियते ॥ तत्र कृष्णयजुर्वेदे ॥ तेजो वै ब्राह्मणः ॥ कां० ६ प्रपा० २।अ० ५।कं० ३ ॥ पुनर्वाल्मीकीयरामायणे बालकाण्डे । अभ्यागच्छन् महातेजा विश्वमित्रो महामुनिः ॥ स० १८।३९ ॥ पुनस्तत्रैवारण्यकाण्डे ॥ एव मुक्त्वा महाबाहुरगस्त्यं सूर्यवर्चसम् ॥ जग्राहापततस्तस्य पादौ च रघुनन्दनः ॥ स० १२।२४ ॥

एवं राज्ञा विशेषेण पूज्या वै ब्राह्मणाः सदा ॥ अध्या० ७३।२९ + ३२ ॥ पुनस्तत्रैव ॥ क्षत्रं वै ब्रह्मणो योनिर्योनिः क्षत्रस्य वै द्विजः ॥ ७३। ११॥२॥ अतएव राज्ञाम् ब्राह्मणोपासनमेव परमोधर्म्म इति सिद्धम् ॥ [कस्मै प्रयोजनाय ? ] (सवितुः) यज्ञाय ॥ तत्र प्रमाणम् ॥ यज्ञ एव सवितेति ॥ सावित्र्युपनिषदि ॥ १०॥१॥ यज्ञ एव सविता ॥ गो० ब्रा० पू० १।३३ ॥ तेनात्र सविता शब्देन यज्ञ इति सिद्धम् ॥ व्यत्ययेन चतुर्थी ॥ अथ राजभिर्यज्ञः सदैव कर्त्तव्य इति स्पष्टी-क्रियते ॥ महाभारतान्तर्गतशान्तिपर्वणि ॥ यज्ञाय सृष्टानि धनानि धात्रा यज्ञोद्दिष्टः पुरुषो रक्षिता च ॥ तस्मात् सर्वं यज्ञ एवोप-योज्यं धनं ततोऽनन्तर एव कामः ॥ यज्ञैरिन्द्रो विविधैः रन्नवद्भिर्देवान् सर्वानभ्ययाद् विराजाः ॥ तेनेन्द्रत्वं प्राप्य विभ्राज-तेऽसौ तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ अध्या० २०।१० + ११ ॥ पुनस्तत्रैव ॥ न हि यज्ञसमं किञ्चित्त्रिषु लोकेषु विद्यते ॥ तस्मा-द्यष्टव्यमित्याहुः पुरुषेणानुसूयता ॥ ६१।५३ ॥ पुनस्तत्रैव ॥ दान-शीलो भवेद्राजा यज्ञशीलश्च भारत ॥ ७२।२ ॥ अथ राजयज्ञमाह ॥ तत्रात्रिसंहितायाम् ॥ दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोषस्य च संप्रवृद्धिः ॥ अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ अध्य० १।२८॥ (प्रश्नः) किं कारणं ब्राह्मणशरीरब्रह्म-तेजो वीर्य्याणां ध्याने ? (उत्तरम्) राजवीर्य्याद्ब्रह्मवीर्य्यम् बलवत्त-रमिति ज्ञात्वा ॥ तत्र प्रमाणम् ॥ न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्मवित् ॥ स्ववीर्य्येणैव तान् शिष्यान्मानवानपकारिणः ॥ स्ववीर्य्या-द्राजवीर्य्याच्च स्ववीर्य्यम बलवत्तरम् ॥ तस्मात् स्वेनैव वीर्य्येण निगृ-ह्णीयादरीन् द्विजः ॥ मनु० अध्या० ११।३१ + ३२ ॥१॥ पुनर्महा-भारतान्तगत आदिपर्वणि ॥ धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं

बलम् ॥ बलाबलं विनिश्चित्य तप एव परं बलम् ॥ अध्या० १७७।४५॥२॥ पुनर्वाल्मीकीयरामायणे बालकाण्डे विश्वामित्र-वाक्यम् ॥ धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ॥ एकेन ब्रह्म-दण्डेन सर्वास्त्राणि हतानि मे ॥ सर्ग० ५६।२३।३॥ तेन राजवी-र्य्याद्ब्रह्मवीर्य्यं श्रेष्ठमिति सिद्धम् ॥ (यः) यो ब्राह्मणः (नः) अस्माकं राज्ञाम् (धियः) बुद्धीः (प्रचोदयात्) यज्ञादिधर्म्ममार्गेषु प्रेरयति ॥ यद्वा। सर्वैं उपासनीयम् ब्रह्मवर्च्चस्तेजःपुञ्जयुक्तं यद्ब्रह्मणः शरीर-मयज्ञाय धीमहि स एव ब्राह्मण अस्माकम् राज्ञाम् धियः यज्ञादिधर्म्ममार्गेषु प्रेरयेत् ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीचतौ ब्राह्मणोपासनानिरूपणं पञ्चमप्रकरणम् ॥

—०—

अथ षष्ठार्थमाह ।

अन्वयः ॥ देवस्य तद्वरेण्यम् भर्गो धीमहि भूर्भुवः स्वः, सवितुर्यो नो धियः प्रचोदयात् ॥ ६ ॥

पदार्थः ॥ वयम् ब्राह्मणाः (देवस्य) दानादिगुण-युक्तस्य राज्ञः (तद्वरेण्यम्) तद्वरणीयम् श्रेष्ठम् (भर्गः) वीर्य्यम् स्वरूपम् वा (धीमहि) ध्यायामः (१) [कथम्भूतम् भर्गम् ?] (भूर्भुवः स्वः) अग्निवायुसूर्य्यादिव्रतचारि-णम् ॥ [कस्मै प्रयोजनाय ?] (सवितुः) विवा-हादि यज्ञाय वा धनाद्यैश्वर्य्याय (यः) यद्राज्ञः स्वरूपः (नः) अस्माकं ब्राह्मणानाम् (धियः) बुद्धयः (प्रचो-दयात्) वेदाध्ययनादि यज्ञकार्य्येषु प्रेरयति ॥ ६ ॥

(१) धीमहि—ध्यायामः राज्ञामसमीपे गच्छामीत्यभिप्रायः ।

भाष्यम् ॥ वयम् ब्राह्मणाः (देवस्य) दानादिगुणयुक्तस्य (तद्व-रेण्यम्) तद्वरणीयम् श्रेष्ठम् वा (भर्गः) वीर्य्यम् ॥ तत्र प्रमाणम् ॥ वीर्य्यं वै भर्गः ॥ इति शतपथब्राह्मणे । ५।४।५।१ ॥ अथ वा ॥ दुष्टाचरणपाप(१)भर्ज्जनहेतुभूतम्, राज्यैश्वर्य्यादितेजःपुञ्जेन युक्तं शरीरम् ॥ तत्र प्रमाणम् ॥ भर्गः पक्कं भवतीति भर्गः ॥ प्रजापति-स्तेजो वेत्युणादयः ॥ पा० ४।२१६ ॥ पुनर्म्मनुसंहितायाम् ॥ इन्द्रा-निलयमार्काणामग्नेश्च वरुणस्य च ॥ चन्द्रवित्तेऽशयोश्चैव मात्रानि-र्हृत्य शाश्वतीः ॥ यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ॥ तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ॥ न चैनम्भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ अ० ७।४+६ ॥ पुनस्तत्रैव । यस्य प्रसादे पद्मा श्रीर्विजयश्च परा-क्रमे ॥ मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ७।११ ॥ अतएव भर्गः शब्देन राज्ञः वीर्य्यम् वा शरीरमिति स्पष्टते ॥ (धीमहि) ध्यायामः [कस्मै प्रयोजनाय ?] (सवितुः) विवा-हादियज्ञाय वा धनाय । तत्र प्रमाणम् ॥ सवित्रं धनं भवति ॥ निरु० दै० १।८ ॥ (प्रश्नः) ब्राह्मणयज्ञे राज्ञां किं प्रयोजनम् ? ॥ (उत्तरम्) यज्ञादेः परिरक्षणमेव ॥ तत्र प्रमाणम् ॥ तत्र महाभार-तान्तर्गतशान्तिपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता ॥ धर्म्मसङ्करक्षा च राज्ञां धर्म्मः

---

(१) पापेति—पापशब्देन निर्धनत्वं वा दारिद्र्यमिति बोधव्यम् ॥ तत्र प्रमाणम् ॥ धर्म्म-संहरते तस्य धनं हरति यस्य सः ॥ क्रियमाणे धने राजन् वयम् कस्य चमेमहि ॥ अभि-शस्तं प्रपश्यामि दरिद्रं पार्श्वतः स्थितम् ॥ दारिद्र्यं पातकं लोके न तत् शंसितुमर्हति ॥ महा० भा० शा० पर्व ।८।१३+१४ ॥

सनातनः ॥ अध्या० ५७।१५ ॥ पुनस्तत्रैव ॥ वेदाध्ययनशीलानां विप्राणां साधुकर्म्मणाम् ॥ पालने यत्नमातिष्ठ सर्वलोकस्य चैव हि ॥ वने चरन्ति यं धर्म्ममाश्रमेषु च भारत ॥ रक्षणाच्छतगुणं धर्म्मम् नित्यं प्राप्नोति पार्थिवः ॥ अध्या० ६६।४०+४१ ॥ अथवा, अर्थेनापि राज्ञां धार्मिकब्राह्मणानां सहायता कर्त्तव्येति प्रयोजनम् ॥ (प्रश्नः) ब्राह्मणानामर्थेन किं प्रयोजनम् ? ॥ (उत्तरम्) यज्ञादौ तत् प्रयोजनम् ॥ तत्र प्रमाणम् ॥ तत्र महाभारतान्तर्गत-शान्तिपर्वणि अर्जुनवाक्यम् ॥ अर्थाद्धर्मस्य कामस्य स्वर्गस्येव नराधिप ॥ प्राणायात्रापि लोकस्य विनार्थं न प्रसिध्यति ॥ अर्थेनेह विहीनस्य पुरुषस्याल्पमेधसः ॥ विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ॥ यस्यार्थाः स पुमान् लोके यस्यार्थः स च पण्डितः ॥ धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्द्धते ॥ नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥ नाधनो धर्म्मकृत्यानि यथावदनुतिष्ठति ॥ धनाद्धर्म्मः प्रभवति शैलादभिनदी यथा ॥ अध्या० ८ । १६+२३ ॥ पुनस्तत्रैवोद्योगपर्वणि ॥ धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ॥ जीवन्ति धनिनो लोके हता येत्वधना नराः ॥ अध्याः० ७१।२३ ॥ १ ॥ पुनर्वाल्मीकीयरामायणे युद्धकाण्डे ॥ अर्थेन हि वियुक्तस्य पुरुषस्याल्पचेतसः ॥ विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ सर्ग० ८३।३२ ॥ पुनस्तत्रैव ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ॥ यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् ॥ यस्यार्थाः स महाभागो यस्यार्थाः स गुणाधिकः ॥ ८३। ३६+३७ ॥ पुनस्तत्रैव ॥ यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रद-

क्षिणम् ॥ अधनेनार्थकामेन नार्थः शक्यं विचिन्वता ॥ ८३।३८ ॥ २ ॥ अथ यज्ञादिधर्मकार्य्येषु स्नातकब्राह्मणे राजा याचनीय इति स्पष्टीक्रियते ॥ तदेव महाभारतान्तर्गतशान्तिपर्वणि भीष्म-वाक्यम् ॥ राजानम् प्रथमं विन्देत्ततो भार्य्यां ततो धनम् ॥ तद्रा-ज्ये राज्यकामानां नान्यो धर्मः सनातनः ॥ अध्या० ४४।५० ॥ अथ राज्ञः विदुषां यज्ञादि धर्मकार्य्येषु धर्मप्रचारणार्थाय धना-द्यर्थदानैः सहायता कर्त्तव्येति स्पष्टीक्रियते ॥ तदेव मानवधर्म-शास्त्रे ॥ दानधर्मं (१) निषेवेत नित्यमैष्टिकपौर्त्तिकम् ॥ परि-तुष्टेन भावेन पात्र(२)मासाद्यशक्तितः ॥ अध्या० ४।२२७ ॥ पुन-स्तत्रैव ॥ सान्तानिकं यक्ष्यमाणमध्वगं सर्वं वेदसम् ॥ गुर्वर्थं पितृमा-त्रर्थं स्वाध्यायार्थ्युपतापिनः ॥ नवैतान् स्नातकान् विद्याद्ब्राह्मणा-न्धर्मभिक्षुकान् (३) ॥ निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥ अध्या० ११।१ + २ ॥ पुनस्तत्रैव ॥ धनानि च यथा शक्तिविप्रेषु (४) प्रतिपादयेत् ॥ वेदवित्सु (५) विविक्तेषु प्रेत्य स्वर्गं समश्नुते ॥ १०।६ ॥ १ ॥ पुनर्याज्ञवल्क्यसंहितायाम् ॥ नातः परतरं धर्मो नृपाणां यद्र-

---

(१) दानमिति—दानस्य लक्षणमाह ॥ न्यायाऽर्ज्जितधनं शान्ते श्रद्धया वैदिके जने ॥ अन्यदा यत् प्रदीयन्ते तद्दानं प्रोच्यते मया ॥ इति श्रीजाबालोपनिषदि ॥२।७॥

(२) पात्रमिति—दानपात्रब्राह्मणस्य लक्षणमाह ॥ अक्रोधः सत्यवचनमहिंसा तप आर्ज्जवम् ॥ अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ यस्मिन्नेतानि दृश्यन्ते न चाकार्य्याणि भारत ॥ स्वभावतो निविष्टानि तत् पात्रमानमर्हति ॥ महा० भा० अनुशा० प० युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ अध्या० ३७॥८+९ ॥

(३) भिक्षुकानिति—भिक्षुकस्य लक्षणमाह ॥ ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ॥ अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ इति अत्रिसंहितायाम् ॥ अध्या० १।१६२ ॥

(४) विप्रेष्विति—विप्रमेधाविनोः वेदपाठकः ॥

(५) वेदविदिति—वेदविदोर्लक्षणमाह ॥ मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः ॥ इतिहासपुराणानि सभवेद्वेदपारगः ॥ इति व्याससंहितायाम् ॥ अध्या० ४।४५॥

पार्जितम् ॥ विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं तथा ॥ अध्या० १।३२३ ॥२॥ पुनर्दक्षसंहितायाम् ॥ न्यायागतेन द्रव्येन कर्त्तव्यं पारलौकिकम् ॥ दानञ्च विधिना देयं काले पात्रे गुणान्विते (१) ॥ अध्या०३।२४ ॥३॥ पुनर्महाभारतान्तर्गतानुशासनपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥ तान् पूजयस्व सततं दानेन परिचर्य्यया ॥ अध्या० ३५।२२ ॥४॥ अतएव स्नातकैर्ब्राह्मणैर्विवाहादिकयज्ञेषु राजोपासना कर्त्तव्येति सिद्धम् ॥ (यः) यद्राज्ञःस्वरूपः (नः) अस्माकम् ब्राह्मणादीनाम् (धियः) बुद्धीः (प्रचोदयात्) वेदाध्ययनादि यज्ञकार्य्येषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो राजोपासनानिरूपणं षष्ठप्रकरणम् ॥६॥

—०—

अथ सप्तमार्थमाह ॥

अथ ब्राह्मणक्षत्रियवैश्यानां गृहस्थानां स्वस्वधर्मानुसारतो गर्भाधानादिसंस्कारमेव परमो धर्मः, तदेव गायत्रितो निर्दिश्यते ॥

**अन्वयः ॥ भूर्भुवःस्वः सवितुस्तद्वरेण्यम् धीमहि देवस्य यो नो धियः प्रचोदयात् ॥ ७ ॥**

**पदार्थः ॥ वयम् ( भूर्भुवःस्वः ) ब्राह्मणक्षत्रिय-वैश्याः ॥ ( सवितुः ) स्त्रियः ( तद्वरेण्यम् ) तद् ऋतु-कालोपासनीयम् भजनीयम् वा ( भर्गः ) स्वरूपम्**

---

(१) गुणान्वितेति—गुणान्वितशब्देन वेदविद्यादिगुणयुक्तेन पुरुषेणेति बोद्धव्यम् न मूर्खं इति भावः ॥

(धीमहि) ध्यायामः दधीमहि पोषयामो वा [कस्य हेतवे ?] (देवस्य) आनन्दस्य कामदेवस्य, यज्ञस्य वा (यः) यत् स्त्रीस्वरूपम् (नः) अस्माकम् कामातुराणाम् (धियः) बुद्धीः, (प्रचोदयात्) पुत्रोत्पादनाय प्रेरयति ॥ ७ ॥

भाष्यम् ॥ वयम् पुत्राभिलाषिनः (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्याः (सवितुः) लिङ्गव्यत्ययेन प्रसवित्र्याः स्वस्त्रियः (तद्वरेण्यम्) उपासनीयम् भजनीयम् वा (भर्गः) स्वरूपम् (धीमहि) ध्यायामः॥ दधीमहि वा "अत्र डुधाञ [धारणपोषणयोः] धातोः प्रार्थनायां लिङ् छन्दस्युभयथेत्यार्धधातुकत्वाच्छुवन् तेन रक्षामि पोषयामीति भावः" (प्रश्नः) स्त्रीस्वरूपानुध्याने कारणं किम् ?॥ (उत्तरम्) स्वधर्ममिति ॥ तत्र प्रमाणम् ॥ ऋतुकालेऽभिगम्यैवं ब्रह्मचर्य्ये व्यवस्थितः ॥ गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यकृत् ॥ भ्रूणहत्यामवाप्नोति ऋतौ भार्य्यापराङ्मुखः ॥ इति व्याससंहितायाम् ॥ अध्या० १।४+५ ॥ (प्रश्नः) कस्मिन् काले ?॥ (उत्तरम्) ऋतुकाले ॥ तत्र प्रमाणम् ॥ ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ॥ पर्ववर्जं (१) व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥ मनु० अध्या० ३।४५ ॥ (प्रश्नः) कीदृशीम् स्त्रियम् धीमहि ?॥ (उत्तरम्) सवर्णां नान्याम् (२) ॥ तत्र प्रमाणम् ॥ सवर्णाग्रे द्विजातीनां प्रश-

---

(१) पर्ववर्ज्जमिति—पर्ववर्ज्जमाह ॥ ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ॥ चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥ तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ॥ त्रयोदशी च शेषास्तु प्रशस्तादशरात्रयः ॥ मनु० अध्या० ३।३६×४७।

(२) अन्येति—अन्याशब्देन शूद्रादिहीनजात्याः स्त्रियः ॥ तत्र हीनजात्यास्त्रियः भोगकाले निषेधमाह ॥ न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः। कस्मिंश्चिदपि वृत्तान्ते शूद्राभार्य्योप-

स्ता दारकर्म्मणि ॥ मनु० सं० अध्या० ३।१२ ॥ पुनस्तत्रैव ॥ अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ॥ निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यां विवर्जयेत् ॥ पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ॥ असवर्णा स्वयं ज्ञेयो विधिरुद्वाह (१) कर्मणि ॥ ३।४२+४३ ॥ अथ सुखाभिलाषिभिः पुरुषैः स्त्रियः भोजनाच्छादनादिभिस्सर्वदोपासितव्येति स्पष्टोक्रियते ॥ तत्र मानवधर्म्मशास्त्रे ॥ पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ॥ पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ॥ यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ॥ न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा॥ जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ॥ तानि कृत्याहतानीव विनश्यन्ति समन्ततः॥ तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः॥ भूतिकामैर्नरैर्नित्यं सत्का(२)रेषूत्स(३)वेषु च ॥ सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्य्या तथैवच ॥ यस्मिन्नेव कुले नित्यं कल्याणन्तत्र वै ध्रुवम् ॥ यदि हि स्त्री न रोचते पुमांसं न प्रमोदते ॥ अप्रमादात्पुनः पुंसः प्रजनं न प्रवर्त्तते ॥ स्त्रियान्तु रोचमानायां सर्वं तद्रोचते कुलम् ॥ तस्यान्त्व रोचमानायां सर्वमेव न रोचते ॥ अध्या० ३।५५+६२ ॥ अनेन स्त्रीणामुपासनाभिज्ञा (प्रश्नः) कस्य हेतोः (उत्तरम्) (देवस्य)

---

दिश्यते ॥ हीनजातीस्त्रियं मोहादुद्वहन्तो द्विजातयः ॥ कुलान्येवनयन्त्याशु ससन्तानानि शूद्रताम् ॥ मनु० अ० ३।१४+१५। पुनस्तत्रैव। कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ॥ कुलान्यकुलतां यन्ति ब्राह्मणातिक्रमेण च ॥ अध्या० ३।६३ ॥

(१) उद्वाहकर्म्मणि—विवाहकर्म्मणि ॥

(२) सत्कारेष्विति ॥ सत्कारशब्देन विवाहादिमान्यसमय इति बोद्धव्यम् ॥

(३) उत्सवेष्विति—उत्सवशब्देन यज्ञविवाहाद्यानन्दजनकव्यापार इति बोद्धव्यम् ॥

आनन्दस्य कामस्य ॥ तत्र प्रमाणम् ॥ यो देवः स देवतेति ॥ निरु० दै० १।१५ ॥ कामोदेवो देवता भवतीति गोप० ब्रा० पू० ४।८ ॥ तेनात्र देवशब्देन कामदेव इति सिद्धम् ॥ यद्वा देवस्य यज्ञस्य ॥ तत्र प्रमाणम् ॥ यद्देवता स यज्ञो वा यज्ञाङ्गो वा तद्देवता भवति ॥ निरु० दै० १।४ ॥ तेनात्र देवशब्देन यज्ञ इति सिद्धम् ॥ (यः) यत् स्त्रीस्वरूपम् (नः) अस्माकम् कामातुराणाम् (धियः) बुद्धीः (प्रचोदयात्) पुत्रोत्पादनादिकार्य्येषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो सवर्णस्त्रीणामुपासनानिरूपणं सप्तमप्रकरणम् ॥ ७ ॥

—०—

अथाष्टमार्थमाह ॥

अन्वयः ॥ देवस्य वरेण्यम् भर्गो धीमहि, तत् सवितुर्भूर्भुवःस्वर्यो नो धियः प्रचोदयात् ॥ ८ ॥

पदार्थः ॥ वयमस्त्रियःस्व (देवस्य) आनन्ददायकस्य पत्युः(वरेण्यम्) श्रेष्ठम् (भर्गः) वीर्य्यम् (धीमहि) धारयामि [कस्य हेतवे] (तत्) तस्य, पुत्रस्य [कथम्भूतस्य पत्युः ?] (सवितुः) प्रेरकस्य, [पुनः कथम्भूतस्य देवस्य?] (भूर्भुवः स्वः) ब्राह्मणक्षत्रियवैश्यादिरूपधारकस्य (यः) यः पतिः (नः) अस्माकम् स्त्रियाम् (धियः) बुद्धीः (प्रचोदयात्) वीर्य्यधारणादिकार्य्येषु प्रकर्षेण चोदयति प्रेरयति ॥८॥

भाष्यम् ॥ वयमस्त्रियःस्व (देवस्य) वीर्य्यप्रदर्शनादिगुणयुक्तानन्ददायकस्य पत्युः ॥ तत्र प्रमाणम् ॥ तत्र महाभारतान्तर्गतानुशास-

नपर्वणि महेश्वरं प्रति उमावाक्यम्॥ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः॥ पत्यागतिसमानास्ति दैवतं वा यथा पतिः॥ अध्या० १४६।५३॥१॥ पुनर्वाल्मीकीयरामायणे अयोध्याकाण्डे॥ भर्त्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा॥ धर्म्मं विसृजमानानां प्रत्यक्षं देवदैवतम्॥ सर्ग० ६२।८॥ पुनस्तत्रैव॥ जानकीं प्रति अनुसूयावाक्यम्॥ स्त्रीणामार्य्य(१)स्वभावानां परमं दैवतं पतिः॥ स० ११७।२४॥२॥ पुनर्मार्कण्डेयपुराणे॥ पतिप्रसादादिह च प्रेत्य चैव यशस्विनि॥ नारीसुखमवाप्नोति नार्य्या भर्त्ता हि देवता॥ अध्या० १६।६७॥३॥ तेनात्र देवशब्देन पति इति सिद्धम्॥ (वरेण्यम्) श्रेष्ठम् (भर्गः) वीर्य्यम्॥ तत्र प्रमाणम्॥ वीर्य्यं वै भर्गः॥ शत० ब्रा० ५।४।५।१॥ शुक्रं शोचते ज्वलति कर्म्मणः॥ निरु० दै०२।११॥ तेनात्र भर्गःशब्देन वीर्य्यं शुक्रं इति सिद्धम्॥ (धीमहि) धारयामि॥ तत्र प्रमाणम्॥ महापातकदुष्टा च पतिगर्भविनाशिनी॥ इति व्यास-संहितायाम्॥ अध्या० २।४५॥ (प्रश्नः) किं कृत्य पत्युर्वीर्य्यम् धारयामि ? (उत्तरम्) स्वधर्ममिति ज्ञात्वा॥ तत्र प्रमाणम्॥ ऋतुस्नाता तु या नारी भर्त्तारं नोपसर्पति॥ सा मृता नरकं याति विधवा च पुनः पुनः॥ इति पाराशरसंहितायाम्॥ अध्या० ४।१३॥ अथैहिकपारलौकिकसुखाभिलाषिणीभिः स्त्रीभिः सर्वोपासनां विहाय सर्वदा पतिरेवोपासनीय इति स्पष्टीक्रियते॥ तत्र मानवधर्म्मशास्त्रे॥ नास्तिस्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्॥ पतिं शुश्रूषते येन तेन स्वर्गे महीयते॥ अध्या० ५।१५५॥१॥ पुनर्विष्णुसंहितायाम्॥ नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्यु-

(१) आर्य्यस्वभावानां—श्रेष्ठस्वभावानाम्॥

पत्यौ जीवति या
योषितं ॥ पतिं शुश्रूषते यत्तु, तेन स्वर्गे महीयते॥
योषिदुपवासव्रतञ्चरेत् ॥ आयुः सा हरते भर्त्तुर्नरकञ्चैव गच्छति ॥
अध्या० २५।१६+१७॥२॥ पुनरङ्गिरस्संहितायाम् ॥ भर्त्तुःशासन-
मुल्लङ्घ्य या च स्त्री विप्रवर्त्तते॥ तस्याश्चैव न भोक्तव्यं विज्ञेया काम-
चारिणी ॥ अध्या०१।६८॥३॥ पुनः कात्यायनसंहितायाम्॥ स्त्रीणां
सौभाग्यतो ज्येष्ठं विद्ययैव द्विजन्मनाम् ॥ न हि ख्याता न तपसा
भर्त्ता तुष्यति योषिताम् ॥ भर्त्तुरादेशवर्त्तिन्या यथोमा बहुभि-
र्व्रतैः ॥ अग्निस्तु तोषितोऽमुत्र सा स्त्री सौभाग्यमाप्नुयात् ॥ अध्या०
१८।६+७॥ पुनस्तत्रैव ॥ पतिमुल्लङ्घ्य मोहात् स्त्री किं न किं नरकं
व्रजेत् ॥ पतिशुश्रूषयैव स्त्री कान् न लोकान् समश्नुते ॥ १८।११॥
४॥ पुनः शङ्खसंहितायाम् ॥ न व्रतैर्नोपवासेन धर्मेण विविधे (१)
न च ॥ नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात्॥ अध्या० ५।८॥
५॥ पुनर्महानिर्वाणतन्त्रे ॥ न तीर्थसेवा नारीणां नोपवासादिकाः
क्रियाः ॥ नैव व्रतानां नियमो भर्त्तुः शुश्रूषणं विना ॥ भर्त्तैव
योषितां तीर्थं तपो दानं व्रतं गुरुः ॥ तस्मात् सर्वात्मना (२) नारी
पतिसेवां समाचरेत् ॥ उल्ला० ८।१००+१०१॥६॥ पुनर्महाभार-
तान्तर्गतानुशासनपर्वणि महेश्वरं प्रत्युमावाक्यम् ॥ पतिर्हि देवो
नारीणां पतिर्बन्धुः पतिर्गतिः ॥ पत्यागतिसमा नास्ति दैवतं वा
यथा पतिः ॥ पतिप्रसादः स्वर्गो वा तुल्यो नार्या न वा भवेत ॥
अहं स्वर्गं नहीच्छेयं त्वय्यप्रीते महेश्वर ॥ अध्या० १४६।५३+
५४ ॥ पुनस्तत्रैव शान्तिपर्वणि भीष्मवाक्यम् ॥ असतो वा सतो

---

(१) धर्मेण विविधेन चेति—पतिव्रतधर्मादातिरिक्ताधुनिकदेवपूजनादिपौराणिक विविधप्रकारान्यस्त्रियधर्मेण स्त्रीणां स्वर्गो न भवतीति भावः ॥

(२) सर्वात्मनेति—मनोवचकर्मादिशरीरस्य सर्वभावेनेति भावः ॥

वापि गुणानेवं प्रभाषते ॥ न सा स्त्री ह्यभिमन्तव्या यस्यां भर्त्ता न तुष्यति ॥ तुष्टे भर्त्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ अग्निसाक्षिकमित्येव भर्त्ता वै दैवतं परम् ॥ दावाग्निनेव निर्दग्धा स पुष्पस्तवकालतः ॥ भस्मीभवति सा नारी यस्या भर्त्ता न तुष्यति ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः ॥ अमितस्य हि दातारं भर्त्तारं का न पूजयेत् ॥ नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् ॥ विसृज्य धनसर्वस्वं भर्त्ता वै शरणं स्त्रियः ॥ अध्या० १४५।३+७ ॥ ७ ॥ पुनर्वाल्मीकीयरामायणे अयोध्याकाण्डे ॥ व्रतोपवासनिरता या नारी परमोत्तमा ॥ भर्त्तारं नानुवर्त्तेत सा च पापगतिर्भवेत् ॥ भर्त्तुः शुश्रूषया नारी लभते गतिमुत्तमाम् ॥ अपि या निर्नमस्कारा निर्वृता देवपूजनात् ॥ शुश्रूषामेव कुर्वीत भर्तृप्रियहिते रता ॥ एष धर्मः पुरा दृष्टो वेदे लोके श्रुतः स्मृतः ॥ सर्ग २४।२६+२८ ॥ पुनस्तत्रैवायोध्याकाण्डे जानकीवाक्यम् ॥ न पिता नात्मजो नात्मा न माता न सखीजनः ॥ इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ सर्ग २७।६॥ पुनस्तत्रैव ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः ॥ अमितस्य तु दातारं भर्त्तारं का न पूजयेत् ॥ स० ४१।२० ॥ पुनस्तत्रैव जानकीं प्रत्यनुसूयावाक्यम् ॥ नगरस्थो वनस्थो वा शुभो वा यदि वाशुभः ॥ यासां स्त्रीणां प्रियो भर्त्ता तासां लोकमहोदयाः ॥ दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः ॥ स्त्रीणामार्य्यस्वभावानां परमं दैवतं पतिः ॥ स० ११७।२३+२४ ॥ पुनस्तत्रैव ॥ पाणिग्रहणकाले च यत् पुरा त्वग्निसन्निधौ ॥ अनुशिष्टं जनन्या मे वाक्यं तदपि मे धृतम् ॥ न विस्मृतन्तु मे सर्वं वाक्यैः स्वैर्धर्मचारिणि ॥ पतिशुश्रूषणान्नार्य्यास्तपो नान्यद्विधीयते ॥ सर्ग०

११८।७+६ ॥ ८ ॥ अतएव स्त्रिभिः पतिरेव देवभावेन सदैवोपासनीय इति सिद्धम् ॥ [कस्य हेतोः पत्युर्वीर्य्यं धारयामि?] (तत्) तस्य (१) पुत्रस्य ॥ तत्र प्रमाणम् ॥ तत् इति सन्ताननाम पितुर्वा पुत्रस्य वा ॥ इति निरु० नै० ६।१६ ॥ तेनात्र तत्शब्देन पुत्रेति सिद्धम् ॥ [ कथम्भूतस्य देवस्य ? ] (सवितुः) क्रीड़ादिधर्मकार्य्येषु प्रेरकस्य, पुत्रोत्पादकस्य वा, [ पुनः कथम्भूतस्य देवस्य ? ] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यादिरूपधारकस्य (यः) यद्वीर्य्यं वा यः पतिः (नः) अस्माकम् स्त्रीणाम् (धियः) बुद्धीः (प्रचोदयात्) क्रीड़ादिधर्मकार्य्येषु प्रकर्षेण चोदयति प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो स्त्रीवीर्य्यधारणे पातिव्रतनिरूपणं

अष्टमप्रकरणम् ॥ ८ ॥

—०—

अथ नवमार्थमाह ॥

अन्वयः ॥ भूर्भुवःस्वस्तद्भर्गो ओ३म् धीमहि देवस्य सवितुर्वरेण्यम् यो नो धियः प्रचोदयात् ॥ ९ ॥

पदार्थः ॥ वयम् ब्राह्मणादयः (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यानां (तद्भर्गः) तद्ब्रह्मवर्चसादिवीर्य्यप्रदायकम् तेजः (ओ३म्) यज्ञोपवीतम् (धीमहि धारयामः [कस्मै प्रयोजनाय ?] (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय [कथम्भूतं यज्ञोपवीतम् ?] (वरेण्यम्) सेवनीयम् धारणीयम् वा (यः) यद्यज्ञोपवीतम् ( नः ) अस्माकं द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति ॥९॥

भाष्यम् ॥ अथ ग्रन्थान्तरे गायत्रितो (१) यज्ञोपवीतधारणस्य विधिर्दृश्यते, तदेवाह ॥ वयम् ब्राह्मणादयः (भूर्भुवःस्वः) ब्राह्मण-क्षत्रियवैश्यानां (तद्वर्गः) तद्ब्रह्मवर्चसादि वीर्य्यप्रदायकम् तेजः (ओम्) यज्ञोपवीतम् ॥ तत्र प्रमाणम् ॥ अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्य यज्ञोपवीती कथं ब्राह्मण इति सहोवाच याज्ञवल्क्य इदं प्रणवमेवास्य तद्यज्ञोपवीतम् ॥ इति याज्ञवल्क्योपनिषदि ॥ तेनात्रोम् शब्देन यज्ञोपवीतमिति गृह्यते ॥ (धीमहि) धारयामः ॥ अथ यज्ञोपवीतम् सर्वदा धारणीय इति स्पष्टीक्रियते ॥ तत्रौशन-संहितायाम् ॥ अग्न्यागारे गवां गोष्ठे होमे जप्ये तथैव च ॥ स्वाध्याये भोजने नित्यं ब्राह्मणानाञ्च सन्निधौ ॥ उपासने गुरूणाञ्च सन्ध्ययोरुभयोरपि ॥ उपवीती भवेन्नित्यं विधि(२)रेष सनातनः ॥ अध्या० १।११+१२ ॥ पुनस्तत्रैव महाभारतान्तर्गतोद्योगपर्वणि ॥ नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्ज्जी ॥ सत्यं ब्रुवन् गुरवे कर्म्म कुर्वन्नब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ अध्या० ३८।२५ ॥ [कस्मै प्रयोजनाय यज्ञोपवीतम् धारयामः ?] (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय [कथम्भूतम् यज्ञोपवीतम् ?] (वरेण्यम्) सेवनीयम् धारणीयम् वा ॥ (यः) यद्यज्ञोपवीतम् [ स्वप्राप्ते सति ] (नः) अस्माकम् द्विजातीनाम् (धियः) बुद्धीः ( प्रचोदयात् ) पञ्च-यज्ञादि कार्य्येषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो यज्ञोपवीतधारणविधिनिरूपणं नवमप्रकरणम् ॥ ९ ॥

—०—

(१) गायत्रीं प्रपठित्वा वै वामस्कन्धेति धारयेत् ॥ इति गायत्रीतन्त्रे पट० ॥ ४ ॥

(२) विधीति—विधिशब्देन नियमेति बोद्धव्यम् ॥

अथ दशमार्थमाह ।

अन्वयः ॥ देवस्य सवितुस्तद्भर्गो ओम् धीमहि, भूर्भुवःस्ववरेण्यम् यो नो धियः प्रचोदयात् ॥ १० ॥

पदार्थः ॥ वयम् द्विजातयःस्व (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय (तद्भर्गः) तद्ब्रह्मवर्च्चसादि-वीर्य्यप्रदायकं ब्रह्मतेजः (ओम्) यज्ञोपवीतम् (धीमहि) धारयामि [कथम्भूतम् यज्ञोपवीतम् ?] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यादिभिः (वरेण्यम्) सेवनीयम् धारणीयं वा (यः) यद्यज्ञोपवीतम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) यज्ञादिधर्म्ममार्गेषु प्रेरयति ॥१०॥

भाष्यम् ॥ अथ यज्ञोपवीतप्रदानकाले आचार्य्यः माणवकं प्रति वदति, हे माणवक तव (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय (तद्भर्गः) तद्ब्रह्मवर्च्चसादिवीर्य्यप्रदायकम् पवित्रम् वा ब्रह्मतेजः (ओम्) यज्ञोपवीतम् (धीमहि) धारयामि ददामीत्यभिप्रायः। [कथम्भूतम् यज्ञोपवीतम् ?] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यादिभिः (वरेण्यम्) सेवनीयम् धारणीयं वा (यः) यद्यज्ञोपवीतम् [स्वकाल-प्राप्ते सति] (नः) अस्माकमाचार्य्याणाम् (धियः) बुद्धीः (प्रचोदयात्) यज्ञोपवीतप्रदानाय प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो यज्ञोपवीतदाननिरूपणं दशमप्रकरणम्।

—०—

अथैकादशार्थमाह ।

तत्र द्विजातिभिर्गङ्गादितीर्थेषु स्नानकाले गायत्रीमन्त्रार्थश्चिन्तनीय इति निर्दिश्यते ॥

अन्वयः ॥ ओम् तद्भर्गो धीमहि भूर्भुवःस्वः वरेण्यम् देवस्य सवितुर्यो नो धियः प्रचोदयात् ॥ ११ ॥

पदार्थः ॥ वयम् मनुष्याः(ओम्) अ+उ+म् । गङ्गादिपवित्रनदीनाम् (तद्भर्गः) तत्तेजःस्वरूपम् जलम् (धीमहि) धारयामः [कथम्भूतम् जलम्] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिस्सेवनीयम् [कस्मै प्रयोजनाय ?] (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय (यः) यत्तेजःस्वरूपं जलम् (नः) अस्माकं मनुष्याणाम् (धियः) बुद्धीः (प्रचोदयात्) अवगाहनात् पूतीकृत्य धर्म्ममार्गेषु प्रेरयति ॥ ८ ॥

भाष्यम्॥ वयम् मनुष्याः (ओम्) अ+उ+म् । गङ्गादि पवित्र नदीनाम् (तद्भर्गः) तत्तेजःस्वरूपम् जलम् ॥ तत्र प्रमाणम् ॥ भर्ग इत्यापो वै भर्गः ॥ इति ब्रह्मप्रोक्तगायत्रीभाष्ये ॥ तेजो जलनामसुपठितम् ॥ निघ० १।१२ ॥ तेन भर्गशब्देन जलमिति गृह्यते ॥ (धीमहि) धारयामः ॥ अथ गङ्गास्नानमाहात्म्यमाह, तत्र विष्णुसंहितायाम् ॥ चतुर्थदिवसेऽस्थिसञ्चयनं कुर्य्युः । तेषां गङ्गाम्भसि प्रक्षेपः । यावत् सङ्ख्यामस्थि पुरुषस्य गङ्गाम्भसि तिष्ठति तावद्वर्षसहस्राणि स्वर्गलोकमधितिष्ठति ॥ अध्या०२०।सू०१+२॥१॥ पुन-

लिखितसंहितायाम् ॥ यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ अध्या० १।७।२॥ पुनाररुद्रयामलोत्तरतन्त्रे शिववाक्यम् ॥ सर्वादितीर्थे सुरतीर्थपावनी गङ्गा महासत्त्वविनिर्गता सती ॥ करोति पापं क्षयमेव मुक्तिं ददाति सा-घादतुलार्थपुण्यदा ॥ पट० २६।८१॥३॥ पुनर्महाभारतान्तर्गतानुशासनपर्वणि भीष्मवाक्यम् ॥ तपसा ब्रह्मचर्य्येण यज्ञैस्त्यागेन वा पुनः ॥ गतिं तां लभते जन्तुर्गङ्गां संसेव्य यां लभेत् ॥ स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ॥ न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ॥ पूर्वे वयसि कर्म्माणि कृत्वा पापानि ये नराः ॥ पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥ स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ॥ व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ अपहत्य तमस्तीव्रं यथा भात्युदये रविः ॥ तथापहत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥ अध्या० २६।२७×३३ ॥ पुनस्तत्रैवाध्याये ॥ अग्नौ प्राप्तं प्रधूयेत तथा तूलं द्विजोत्तम ॥ तथा गङ्गावगाढस्य सर्वपापं प्रधूयते ॥२६।४२॥ पुनस्तत्रैव ॥ स्वायम्भुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ॥ स्नातानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥ २६।५१ ॥ पुनस्तत्रैव, वनपर्वणि पुलस्त्यवाक्यम् ॥ सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम् ॥ द्वापरेऽपि कुरुक्षेत्रं गङ्गा कलियुगे स्मृता ॥ अध्या० ८५।९०॥ पुनस्तत्रैव ॥ अवगाढा च पीता च (१) पुनात्यासप्तमं कुलम् ॥ याव-

(१) पीता चेति—पीताशब्देन पानेति भाष्यम् ॥ अथ गङ्गाजलपानस्य माहात्म्यमाह ॥ तत्र महाभारतान्तर्गतानुशासनपर्वणि ॥ यथा सुराणाममृतं पितॄणाञ्च यथा स्वधा ॥ सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ॥ अध्या० २६।४९ ॥ पुनस्तत्रैव ॥ त्रिषु लोकेषु

दस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम् ॥ तावत् स पुरुषो राजन् स्वर्गलोके महीयते ॥ न गङ्गासदृशं तीर्थं न देवः केशवात् परः ॥ ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥ यत्र गङ्गा महाराज स देशस्तत्तपोवनम् ॥ सिद्धिक्षेत्रञ्च तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥ इदं सत्यं द्विजातीनां साधूनामात्मजस्य च ॥ सुहृदाञ्च जपेत् कर्णे शिष्यस्यानुगतस्य च ॥ इदं धन्यमिदं मेध्यमिदं स्वर्ग्यमनुत्तमम् ॥ इदं पुण्यमिदं रम्यं पावनं धर्म्ममुत्तमम् ॥ महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् ॥ अध्या० ८५।९४+१०० ॥ अथ दूरवासिभिः पुरुषैः प्राणान्तकाले गङ्गोपासना कर्त्तव्येति स्पष्टीक्रियते ॥ तत्र महाभारतान्तर्गतानुशासनपर्वणि भीष्मवाक्यम् ॥ उपासन्ते यथा बाला मातरं क्षुधयार्दिताः ॥ श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ॥ अध्या० २६।५० ॥ पुनस्तत्रैव ॥ उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसम्मतः ॥ चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥ न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ॥ आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥ अध्या० २६।७०+७१ ॥ पुनस्तत्रैव ॥ भवन्ति निर्विषा सर्पा यथा तार्क्ष्यदर्शनात् ॥ गङ्गाया दर्शनात्तद्वत् सर्वपापैः प्रमुच्यते ॥ २६।४४ ॥ पुनस्तत्रैव ॥ वाङ्मनःकर्म्मजैर्ग्रस्तः पापैरपि पुमानिह ॥ वीक्ष्य गङ्गां भवेत् पूतो अत्र मे नास्ति संशयः ॥ समा-

---

ये केचित् प्राणिनः सर्व एव ते ॥ तर्पमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ॥ यस्तु सूर्य्येण निष्टप्तं गाङ्गेयं पिबते जलम् ॥ गवां निर्हारनिर्मुक्तादायावकात्तद्विशिष्यते ॥ इन्दुव्रतसहस्रन्तु यश्चरेत् कायशोधनम् ॥ पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ ॥ अध्या० २६।३७+४० ॥

परान् सप्त परान् पितॄंस्तेभ्यश्च येऽपरे ॥ पुन्नास्तारयते गङ्गा वीक्ष्य स्पृष्ट्वावगाह्य च ॥ २६।६०+६२ ॥ पुनस्तत्रैव ॥ शिलावृत्तिस्तु सिद्धस्य वाक्यैः सम्बोधितस्तदा ॥ गङ्गामुपास्य विधिवत् सिद्धिं प्राप सुदुर्लभाम् ॥ तथा त्वमपि कौन्तेय भक्त्या परमया युतः ॥ गङ्गामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ २६।१०३+१०४ ॥ [कथम्भूतम् जलम् ?] (भूर्भुवःस्वः वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिः सेवनीयम् [कस्मै प्रयोजनाय ?] ॥ (देवस्य) शरीरस्य (सवितुः) ऐश्वर्य्याय (यः) यद्गङ्गायाः तेजःस्वरूपं जलम् (नः) अस्माकम् मनुष्याणां (धियः) बुद्धीः (प्रचोदयात्) अवगाहेन पूतीकृत्य धर्म्ममार्गेषु प्रेरयति ॥ यद्वा ॥ यद्गङ्गायाः तेजःस्वरूपम् जलं वयम् मनुष्याः धारयामः, तत्तेजःस्वरूपं जलं अस्माकम् पापं नाशयित्वा स्वर्गादिस्थानेषु प्रेरयेदिति भावः ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितौ गङ्गास्नानवर्णनम् एकादशप्रकरणम् ॥११॥

—०—

अथ द्वादशार्थमाह।

अथ द्विजातीनां जलस्नानादपरं भस्मस्नानमपि परमो धर्म्मः तद्भस्मस्नानप्रतिपादकार्थमाह ॥

अन्वयः ॥ सवितुस्तद्भर्गो धीमहि, भूर्भुवःस्वर्वरेण्यम्, देवस्य यो नो धियः प्रचोदयात् ॥ १२ ॥

पदार्थः ॥ वयम् मनुष्याः(सवितुः) अग्नेः(तद्भर्गः)तद्वीर्य्यम् भस्म (धीमहि) धारयामः [कथम्भूतम् भस्म ?] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिः सेवनीयम्

**[ कथम्भूतस्याग्नेः ? ] ( देवस्य ) प्रकाशमानस्य (यः) यदग्नेर्वीर्य्यम् भस्म ( नः ) अस्माकम् द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) भस्मधारणतयास्मान्निर्म्मलीकृत्य मोक्षमार्गेषु प्रेरयति ॥ १२ ॥**

भाष्यम् ॥ वयम् मनुष्याः (सवितुः) अग्नेः ॥ तत्र प्रमाणम् ॥ इममेवाग्निं सवितारमाहुः सर्वस्य प्रसवितारम् ॥ इति निरु० परि०अ०२ खं०११ ॥ (तद्भर्गः) तद्वीर्य्यम् भस्म ॥ तत्र प्रमाणम् ॥ तत्र वृहज्जाबालोपनिषदि ॥ अग्निरूपाग्निना दग्धं जगत्तद्भस्मसात्कृतम् ॥ अग्निवीर्य्यमिदं प्राहुस्तद्वीर्यं भस्म यत्ततः ॥ ब्रा०२।१० ॥ पुनः पद्मपुराणान्तर्गतशिवगीतायाम् रामचन्द्रं प्रत्यगस्त्यवाक्यम् ॥ वीर्य्यमग्नेर्यतो भस्म वीर्य्यवान् भस्मसंयुतः ॥ भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः ॥ तेनात्र भर्गःशब्देनाग्नेर्वीर्य्यम् भस्मेति गच्छति ॥ अथ कस्माद्भस्मेत्युच्यते? ॥ तत्र जाबालोपनिषदि ॥ विभूतिर्भसितं भस्मक्षारं रक्षेति भस्मनो।भवन्ति पञ्चनामानि ॥ पञ्चभिर्नामभिर्भृशमैश्वर्य्यकरणाद्भूतिः ॥ भस्मसर्वाघभक्षणात् ॥ भासनाद्भसितम् ॥ क्षारणादापदां क्षारम् ॥ भूतप्रेतपिशाचब्रह्मराक्षसापस्मारभवभीतिभ्यो रक्षणाद्रक्षेति ॥ ब्राह्म० १ ॥ (धीमहि) धारयामः [ कथम्भूतम् भस्म ? ] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिः सेवनीयम् ॥ (प्रश्नः) भस्मधारणे किं प्रयोजनम् ? ॥ (उत्तरम्) आग्नेयस्नानमेव ॥ तत्र प्रमाणम् ॥ तत्र पराशरसंहितायाम् ॥ स्नानानि पञ्च पुण्यानि कीर्त्तितानि मनीषिभिः ॥ आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥ आग्नेयम् भस्मना स्नानमवगाह्यन्तु वारुणम् ॥ आपोहिष्ठेति तद्ब्राह्मं वायव्यं गोरजस्कृतम् ॥]

यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ॥ अध्या० १२।१०+१३॥१॥
पुनरौशनःसंहितायाम् ॥ सावित्रीं शतरुद्रीयं वेदानाञ्च विशे-
षतः ॥ अभ्यसेत् सततं वेदं भस्मस्नानपरायणः ॥ अध्या०३।५८॥२॥
पुनर्वाजसनेयिसंहितायाम् ॥ पवित्रेण पुनीहि मा शुक्रेण [वीर्य्ये-
ण भस्मना] देवदीद्यत् ॥ अग्नेक्रत्वाक्रतू २ ॥ रनु ॥ अध्या० १९।
४०॥ पुनर्बृहज्जाबालोपनिषदि ॥ सन्ध्याद्वये निशीथे च तथा
पूर्वावसानयोः ॥ सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ॥
स्त्रियं नपुंसकं गृध्रं विड़ालं बकमूषिकौ ॥ स्पृष्ट्वा तथा विधान-
न्यान् भस्मस्नानं समाचरेत् ॥ ब्रा० ३।५+६॥ पुनस्तत्रैव ॥ जन-
कोह वैदेहः सहोवाच याज्ञवल्क्यं भस्मधारणात् किं फलमश्नुत
इति सहोवाच तद्भस्मधारणादेव मुक्तिर्भवति, तद्भस्मधारणादेव
शिवसायुज्यमाप्नोति न स पुनरावर्त्तते स एष ज्योतिरिति वै
याज्ञवल्क्यः ॥ ब्रा०७।२॥ पुनस्तत्रैव ॥ रुद्राग्नेर्यत्परं वीर्य्यं तद्भस्म
परिकीर्त्तितम् ॥ तस्मात्सर्वेषु कालेषु वीर्य्यवान् भस्मसंयुतः ॥ ब्रा०
५।१७॥२॥ पुनर्भस्मजाबालोपनिषदि ॥ एतन्मध्याह्नसायाह्नेषु त्रिका-
लेषु विधिवद्भस्मधारणमप्रमादेन कार्य्यम्। प्रमादात् पतितो भवति ॥
ब्राह्मणानामयमेव धर्मोऽयमेव धर्म्मः ॥ एवं भस्मधारणमकृत्वाना-
श्नीयादापोऽन्नमन्यद्वा ॥ प्रमादात्त्यक्त्वा भस्मधारणं न गायत्रीं ज-
पेत्। न जुहुयादग्नौ तर्पयेद्देवानृषीन् पित्रादीन् ॥ अयमेव धर्म्मः
सनातनस्सर्वपापनाशको मोक्षहेतुः ॥ नित्योऽयं धर्मो ब्राह्म-
णानां ब्रह्मचारिगृहिवानप्रस्थयतीनाम् ॥३॥ पुनः शिवाथर्वशीर्षे ॥
अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म व्योममिति भस्म-
सर्वं ह्वा इदं भस्म मन एतानि चक्षूंषियस्माद्व्रतमिदं पाशु-
पतं यद्भस्मनाङ्गानि संस्पृशेत् तस्माद्ब्रह्म तदेतत्पाशुपतं पशु-

पाशविमोचणाय ॥ ४ ॥ पुनर्महानिर्वाणतन्त्रे ॥ मृत्स्नया भस्मना वापि त्रिपुण्ड्रं (१) विन्दुसंयुतम् ॥ ललाटे तिलकं कुर्य्याद्गायत्र्या बद्धकुन्तलः ॥ ५।४३॥५॥ पुनः कङ्कालमालिनीतन्त्रे ॥ ततस्तु भस्मतिलकं रुद्राक्षं धारयेत्ततः ॥ पट० ५॥२ ॥ पुनः शिवगीतायां रामं प्रत्यगस्त्यवाक्यम् ॥ आत्मन्यग्निं समारोप्य याते अग्नेति मन्त्रितः ॥ भस्मादायाग्निरित्याद्यै(२)र्विमृज्याङ्गानि संस्पृशेत् ॥ भस्मच्छन्नो भवेद्विद्वान् (३) महापातकसम्भवैः ॥ पापैर्विमुच्यते सत्यं मुच्यते च न संशयः ॥ अध्या० ३।२७+२९ ॥ पुनस्तत्रैव रामचन्द्रं प्रति शिववाक्यम् ॥ सर्वेण सर्वदा कार्य्यं भूतिरुद्राक्षधारणम् ॥ नित्यं शिवं शिवोक्तो न शिवभक्तिमभीप्सिता ॥ नर्य्यं भस्मसमायुक्तो रुद्राक्षान् यस्तु धारयेत् ॥ महापापैरपि स्पृष्टो मुच्यते नात्र संशयः ॥ अन्तकाले तु रुद्राक्षान्विभूतिं धारयेत्तु यः ॥ महापापोपपापाद्यैरपि स्पृष्टो नराधमः ॥ सर्वथा नोपसर्पन्ति तं जनं यमकिङ्कराः ॥ अध्या० १६।१९+२३॥७ ॥ [ कथम्भूत-

---

(१) त्रिपुण्ड्रमिति—त्रिपुण्ड्रस्य लक्षणमाह ॥ भ्रुवौ मध्यं समारभ्य यावदन्तो भवेद्भ्रुवोः ॥ मध्यमाऽनामिकाङ्गुल्योर्मध्ये तु प्रतिलोमतः ॥ अङ्गुष्ठेन कृता रेखा त्रिपुण्ड्रः सोऽभिधीयते ॥ इति काशीखण्डे ॥ अथ वर्णानुसारत्रिपुण्ड्रधारणस्याधिकारभेदमाह ॥ षडङ्गुलप्रमाणेन ब्राह्मणानां त्रिपुण्ड्रकम् ॥ नृपाणां चतुरङ्गुल्यं वैश्यानां द्व्यङ्गुलं मतम् ॥ शूद्राणामथ सर्वेषामेकाङ्गुल्यं त्रिपुण्ड्रकम् ॥ इति स्मृतिलाघवम् ॥

(२) अग्निरिति—भस्मग्रहणकाले अग्निरिति मन्त्रमाह ॥ तत्र भस्मजाबालोपनिषदि ॥ अग्निरिति भस्मवायुरिति भस्मजलमिति भस्मस्थलमिति भस्मव्योमिति भस्मदेवा भस्म ऋषयो भस्म सर्वं ह्य वा एतादिदं भस्मपूतं पावनं नमामि ॥ १ ॥

(३) विद्वानिति—विदुषोर्लक्षणमाह ॥ तत्त्वसर्गं भावसर्गं भूतसर्गं च ये विदुः ॥ ईश्वरं पुरुषञ्चैव स च विद्वान् स उच्यते ॥ इति देवीपुराणे नारदं प्रति सनत्कुमारवाक्यम् ॥ अध्या० १० ॥

स्याग्नेः ? ] (देवस्य) प्रकाशमानस्य (यः) यदग्नेर्वीर्य्यम् भस्म (नः)

अस्माकम् मनुष्याणाम् (धियः) बुद्धीः (प्रचोदयात्) भस्मधारणतया

स्यान्निर्मलीकृत्य मोक्षमार्गेषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो भस्मज्ञानवर्णनं द्वादशप्रकरणम् ॥१२॥

—०—

अथ त्रयोदशार्थमाह ॥

गुरूपासनेव नराणां सर्वसिद्धिदा तदेव गायत्रितो निर्दिश्यते ॥

अन्वयः ॥ वयम् मनुष्याः देवस्य तद्भर्गो धीमहि

सवितुर्वरेण्यम् भूर्भुवःस्वर्यो नो धियः प्रचोदयात् ॥१३॥

पदार्थः ॥ (देवस्य) गुरोः (तद्भर्गः) तत्तेजःस्वरूपम्

(धीमहि)ध्यायेम [कथम्भूतस्य गुरोः?] (सवितुः) प्रेरकस्य

[कथम्भूतम् स्वरूपम् ?] (वरेण्यम्) सेवनीयम् [कस्मै

प्रयोजनाय ?] (भूर्भुवःस्वः) ऋग्यजुःसामादिवेदाध्य-

नाय (यः) यो गुरुः (नः) अस्माकम् ( धियः ) बुद्धीः

(प्रचोदयात्) प्रेरयति ॥ १३ ॥

भाष्यम् ॥ वयम् द्विजातयः (देवस्य) विद्याप्रदानादिगुणयुक्तस्य

गुरोः (१) ॥ तत्र प्रमाणम् आचार्य्यदेवो भवेति तैत्तिरीयोपनि-

---

(१) गुरुरिति—गुरोः लक्षणमाह ॥ तत्र विष्णुसंहितायाम् ॥ त्रयः पुरुषस्यातिगुरवो भवन्ति ॥ माता पिता आचार्य्यश्च ॥ अध्या॰ १। सू॰ १+२ ॥ पुनरौशनसंहितायाम् ॥ यो हि वासयति दिवा येन सद्योपदिश्यते ॥ ज्येष्ठो भ्राता च भर्त्ता च पञ्चैते गुरवस्तथा ॥ पुनर्महानिर्वाणतन्त्रे ॥ माता पिता ब्रह्मदाता महान्तो गुरवः स्मृतः ॥ उल्ला॰ अध्या॰ ११२१॥ पुनः कुलार्णवतन्त्रे ॥ प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा ॥ शिक्षको बोध- कश्चैव षड़ेते गुरवः स्मृताः ॥ उल्ला॰ १३ ॥ ११११४५ ॥

षदि ॥ पुनर्योगशिखोपनिषदि ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवः सदाशिवः ॥ अध्या० ५।५६॥१॥ पुना रुद्रयामलोत्तरतन्त्रे ॥ गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः ॥ पट० २।६५॥२॥ तेनात्र देवशब्देन गुरुरिति सिद्धम् ॥ ( तद्भर्गः ) तत्तेजःस्वरूपम् (१) । (धीमहि) व्यत्ययेन ध्यायेम गुरोः समीपं गच्छामीत्यभिप्रायः ॥ (प्रश्नः) किं कृत्य ? (उत्तरः) स्वधर्म्ममिति ज्ञात्वा ॥ अथ मुमुक्षुभिर्गुरोरुपासना सदैव कर्त्तव्येति स्पष्टीक्रियते ॥ तत्र योगशिखोपनिषदि ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवस्सदाशिवः ॥ न गुरोरधिकः कश्चित्त्रिषु लोकेषु विद्यते ॥ दिव्यज्ञानोपदेष्टारं देशिकं परमेश्वरम् ॥ पूजयेत् परया भक्त्या तस्य ज्ञानफलं लभेत् ॥ यथा गुरुस्तथैवेशो यथैवेशस्तथा गुरुः ॥ पूजनीयो महाभक्त्या न भेदो विद्यतेऽनयोः ॥ अध्या० ५।५६ + ५८॥१॥ पुनर्निरालम्बोपनिषदि ॥ सर्वशरीरस्थचैतन्यब्रह्मप्रापको गुरुरुपास्यः ॥ २ ॥ पुनर्ब्रह्मविद्योपनिषदि ॥ गुरुभक्तिं सदा कुर्याच्छ्रेयसे भूयसे नरः ॥ गुरुरेव हरिः साक्षान्नान्य इत्यब्रवीच्छ्रुतिः ॥२१॥३॥ पुनर्मानवधर्म्मशास्त्रे ॥ वेदाभ्यासस्तपोज्ञानमिन्द्रियाणाञ्च संयमः ॥ अहिंसा गुरुसेवा च निःश्रेयस्करम्परम् ॥ अध्या० १२।८३॥४॥ पुनरत्रिसंहितायाम् ॥ एकाक्षरं प्रदातारं यो गुरुं नाभिमन्यते ॥ शुनां योनिशतं गत्वा चाण्डालेष्वपि जायते ॥ अध्या० १।१०॥५॥ पुनर्याज्ञवल्क्यसंहितायाम् ॥ गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ अध्या० १।२६॥६॥ पुनः हारीतसंहितायाम् ॥ गुरुशुश्रूषणञ्चैव यथान्यायमतन्द्रितः ॥ सायं प्रातरुपा-

---

तेजःस्वरूपमिति—गुरोस्तेजःस्वरूपमाह ॥ तत्र रुद्रयामलतन्त्रे ॥ गुरुं सञ्चिन्तयेच्छीर्षाम्भोजे सहस्रके दले ॥ तरुणादित्यसङ्काशं तेजोबिम्बं महागुरुम् ॥ पट० २।११ ॥

णीत विवाहाग्निं द्विजोत्तमः ॥ अध्या० १।२६॥७ ॥ पुनः शंख-
संहितायाम् ॥ न स्नानेन न होमेन नैवाग्निपरितर्पणात् ॥ ब्रह्म-
चारी दिवं याति स याति गुरुपूजनात् ॥ अध्या० ५।६॥८॥ पुन-
र्महानिर्वाणतन्त्रे ॥ गुरुशुश्रूषणे युक्ता भक्ता मातृपदाम्बुजे ॥ अनु-
रक्ता स्वदारेषु न हि तान् बाधते कलिः ॥ उल्ला० ४।५८॥६॥ पुना-
रुद्रयामलोत्तरतन्त्रे ॥ श्रीगुरोश्चरणाम्भोजं ध्यायेच्चैव सदैव तम् ॥
भुक्तये मुक्तये वीर नान्यभक्तं ततोऽधिकम् ॥ पट० १।२३५॥ पुन-
स्तत्रैव ॥ गुरुमूलं जगत्सर्वं गुरुमूलं परन्तपः ॥ गुरोः प्रसादमात्रेण
मोक्षमाप्नोति सद्वशी ॥ न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत्तथा ॥
दिवारात्रौ गुरो राज्ञां दासवत्परिपालयेत् ॥ उक्तानुक्तेषु कार्य्येषु
नापेक्षां कारयेद्बुधः ॥ गच्छतः प्रयतो गच्छेद् गुरोराज्ञां न
लङ्घयेत् ॥ न शृणोति गुरोर्वाक्यं शृणुयाद्वा पराङ्मुखः ॥ अहितं
वा हितं वापि रौरवं नरकं व्रजेत् ॥ १।२२+२२८॥ पुनस्तत्रैव ॥
गुरुपादविहीना ये ते नश्यन्ति ममाज्ञया ॥ गुरुस्थलीह तत्राणो
गुरुमूलं परं तपः ॥ गुरोः प्रसादमात्रेण सिद्धिरेव न संशयः ॥
१।१९१॥ पुनस्तत्रैव ॥ गुरुभक्त्या च शक्रत्वमभक्त्या शूकरो भवेत् ॥
गुरुभक्तेः परं नास्ति भक्तिशास्त्रेषु सर्वतः ॥ १।२४५॥ पुनस्तत्रैव ॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ॥ गुरुर्विशेषतः पूज्यो
धर्म्माधर्म्मप्रदर्शकः ॥ गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः ॥
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ २।६५ ॥ पुनस्तत्रैव ॥
गुरुर्माता पिता स्वामी बान्धवः सुहृदः शिवः ॥ इत्याध्याय मनो
नित्यं भजेत् सर्वात्मना गुरुम् ॥ २।७३॥१०॥ पुनः कामाख्या-
तन्त्रे ॥ सर्वेषां भुवने सत्यं ज्ञानाय गुरुसेवनम् ॥ ज्ञानान्मोक्षम-
वाप्नोति तस्मात् ज्ञानं परात्परम् ॥ अतो यो ज्ञानदाने हि न

क्षमस्तं त्यजेद्गुरुम् ॥ पट० ४॥११॥ पुनः कुलार्णवतन्त्रे ॥ कायक्लेशेन महता तपसा वापि यत् फलं ॥ तत् फलं लभते देवि सुखेन गुरुसेवया ॥ भोगमोक्षार्थिनां ब्रह्म विष्णीशपदकाङ्क्षिणाम् ॥ भक्तिरेव गुरौ देवि नान्यः पन्था इति श्रुतिः ॥ उल्ला० ११॥१२ ॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि भीष्मवाक्यम् ॥ विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते प्रत्यासन्ना मनसा कर्मणा वा ॥ तेषां पापं भ्रूणहत्या विशिष्टं नान्यस्तेभ्यः पापकृदस्ति लोके ॥ तस्मात् पूजयितव्याश्च संविभाज्यश्च यत्नतः ॥ गुरवोऽर्चयितव्याश्च पुराणं धर्ममिच्छता ॥ अध्या०१०८।२१+२२॥१३॥ पुनर्वाल्मीकीयरामायणेऽयोध्याकाण्डे ॥ स्वर्गो धनं वा धान्यं वा विद्या पुत्राः सुखानि च ॥ गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥ स० ३०।३६॥१४॥ अथ गुरोर्लक्षणमाह ॥ तत्र मानवधर्मशास्त्रे ॥ निषेकादीनि कर्माणि यः करोति यथाविधि ॥ सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ अध्या० २।१४२ ॥ पुनस्तत्रैव ॥ अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ॥ तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ २।१४९॥१॥ पुनारुद्रयामलोत्तरतन्त्रे ॥ शान्तोदान्तः कुलीन (१)

---

(१) कुलीन इति—कुलीनशब्देन सत्कुलोद्भवे सदाचारयुक्तेति बोद्धव्यम् ॥ तत्र प्रमाणम्। तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ॥ उत्कर्षं चापकर्षञ्च मनुष्येष्विह जन्मतः ॥ मनु० अध्या० १०।४२ ॥ पुनर्महाभारतान्तर्गत उद्योगपर्वणि धृतराष्ट्रं प्रति विदुरवाक्यम् ॥ तपो दमो ब्रह्मवित्तं वितानाः पुण्या विवाहाः सततन्नान्नदानम् ॥ येष्वेवैते सप्तगुणा भवन्ति सम्यग्वृत्तास्तानि महाकुलानि ॥ येषां वृत्तं न व्यथते न यो निश्चित्तप्रसादेन चरन्ति धर्मम् ॥ ये कीर्त्तिमिच्छन्ति कुले विशिष्टां त्यक्त्वा नृतांस्तानि महाकुलानि ॥ अध्या० ३५।२३×२४ ॥ पुनस्तत्रैव ॥ दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ॥ धर्मापेक्षी मृदुर्ह्रीमान् स कुलीनः शताद्वरः ॥ अध्या० ३८।४७ ॥

श्च विनीतः शुद्धवेशवान् ॥ आश्रमी(१) ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ॥ निग्रहानुग्रहे शक्तो वशी मन्त्रार्थजापकः ॥ निरोगी निरहङ्कारो विकाररहितो महान् ॥ पण्डितो(२) वाक्पतिः श्रीमान् सदा यज्ञविधानकृत् ॥ पुरश्चरणकृत्सिद्धो हिताहितविवर्ज्जितः ॥ सर्वलक्षणसंयुक्तो महाजनगणादृतः ॥ प्राणायामादिसिद्धान्तो ज्ञानी मौनी विरागवान् ॥ तपस्वी सत्यवादी च सदा ध्यानपरायणः ॥ आगमार्थ(३)विशिष्टज्ञो निजधर्मपरायणः ॥ अव्यक्तलिङ्गचिह्नस्थो भावको भद्रदानवान् ॥ लक्ष्मीवान् धृतिमान्नाथो गुरुरित्यभिधीयते ॥ पट० २।५०+५६॥१॥ पुनः कामाख्यातन्त्रे ॥ ज्ञानत्रयं यदा भाति स गुरुः शिव एव हि ॥ अज्ञानिनो वर्जयित्वा शरणं ज्ञानिनो व्रजेत् ॥ ज्ञानाद्धर्मो भवेन्नित्यं ज्ञानादर्थो हि पार्वति ॥ ज्ञानात् काममवाप्नोति ज्ञानान्मोक्षमवाप्नुयात् ॥ पट० ४॥२॥ [कथम्भूतस्य गुरोः ?] (सवितुः) विद्याध्ययनादिधर्ममार्गेषु प्रेरकस्य ॥ तत्र प्रमाणम् ॥ विद्याङ्गमासनं मन्त्रं मुद्रातन्त्रादिकं प्रभो ॥ सर्वं गुरुमुखाल्लब्धा सफलो नान्यथा भवेत् ॥ इति रुद्रयामलोत्तरतन्त्रे ॥ पट० १।२३८ ॥ [ कथम्भूतम् स्वरूपम् ? ] (वरेण्यम्) सेवनीयमुपासनीयं वा [कस्मै प्रयोजनाय गुरोः स्वरूपं

(१) आश्रमीति—आश्रमिशब्देन गृहस्थाश्रमीति बोद्धव्यम् ॥ तत्र प्रमाणम् ॥ ततो हि विहितं शुद्ध गृहस्थं गुरुमाश्रयेत् ॥ इति कामाख्यातन्त्रे ॥ पट० ७ ॥

(२) पण्डितेति—पण्डितस्य लक्षणमाह ॥ आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ॥ यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ निषेवते प्रशस्तानि निन्दितानि न सेवते ॥ अनास्तिकः श्रद्दधान एतत् पण्डितलक्षणम् ॥ क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ॥ यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ इति महाभारतान्तर्गत उद्योगपर्वणि विदुरनीतौ ॥ अध्या० २३।२०+२२ (विशेषं तत्रैव) ॥

(३) आगमेति—आगमशब्देन तन्त्रशास्त्रमिति बोद्धव्यम् ॥

धीमहि ?] (भूर्भुव:स्व:) ऋग्यजु:सामादिवेदनामध्ययनाय (य:) यो गुरु: (न:) अस्माकम् (धिय:) बुद्धी: (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥ यद्वा, यो गुरुर्द्विजातीन् उपनीय वेदाध्ययनादिधर्मकार्य्येषु प्रेरयति, तत्सवितुर्देवस्य गुरो: समीपेषु ज्ञानहेतवे गच्छामीत्यभिप्राय: ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो गुरोरुपासनावर्णनं त्रयोदशप्रकरणम् ॥ १३ ॥

—०—

अथ चतुर्दशार्थमाह ॥

गृहस्थानां द्विजातीनां पञ्चसूनादोषयुक्तानां प्रायश्चित्तकरणाय ब्रह्मयज्ञादि पञ्चयज्ञानामनुष्ठानमेव परमो धर्म्म: ॥ तत्र प्रमाणम् ॥ पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्कर: ॥ कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥ तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभि: ॥ पञ्चक्लृप्ता महायज्ञा: प्रत्यहं गृहमेधिनाम् ॥ अध्यापनं ब्रह्मयज्ञ: पितृयज्ञस्तु तर्पणम् ॥ होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ पञ्चैतान् यो महायज्ञान्नहापयति शक्तित: ॥ स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते॥ मनु० अध्या० ३।६८+७१ ॥ तत्पञ्चयज्ञानाम् प्रतिपादनं गायत्रित: क्रियते ॥ तत्रादौ ब्रह्मयज्ञस्य प्रतिपादिकार्थमाह ॥

अन्वय: ॥ देवस्य सवितुस्तत् ओम् धीमहि, भूर्भुवस्वर्वरेण्यम् भर्गो यो नो धिय: प्रचोदयात् ॥१४॥

पदार्थ: ॥ वयम् द्विजातय: (देवस्य) ब्रह्मादे:(सवितु:) प्रसवितृ गायत्र्या:, उपदेशम् (तद् ओम्) वेदम्

(धीमहि) चिन्तयामः [ कथम्भूतं वेदम् धीमहि ? ] (भूर्भुवःस्वः) ऋग्यजुःसामादिसंज्ञकम् ॥ यद्वा ॥ (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिस्सेवनीयम् [पुनः कथम्भूतम् वेदम् ? ] (भर्गः) तेजःस्वरूपम् (यः)यो गायत्र्या उपदेशोवेदः (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥ १४ ॥

भाष्यम् ॥ वयम् द्विजातयः (देवस्य) ब्रह्मादेः (सवितुः) लिङ्गव्यत्ययेन प्रसवित्र्याः गायत्र्याः, उपदेशम् (तदोम्) तद् अ-उ-मऋग्यजुस्सामादिसंज्ञकम् वेदम् ॥ तत्र प्रमाणम् ॥ ओम् अव्य० अव (१)-मन् तस्यातो लोपः गुणः ॥ ज्ञेये, ब्रह्मणि च ॥ ओमिति ब्रह्म ॥ तैत्ति० उप० ८।१ ॥ वेदमन्त्र महाराज परब्रह्ममयं सदे-

---

(१) गायत्र्या उपदेशम् वेदमिति—गायत्र्या उपदेश एव वेदः ॥ तत्र प्रमाणम् ॥ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुतमानुषेभिः ॥ ऋग्वे० मं० १० अ० १० सू० १२५ ॥ पराशक्तिमाहात्म्ये महालक्ष्मीवाक्यम् ॥ पुनर्देवीभागवतान्तर्गतभगवतीगीतायाम् हिमालयं प्रति भगवतीवाक्यम् ॥ सर्वज्ञात्सर्वशक्तेश्च मत्तो वेदः समुत्थितः ॥ अज्ञानस्य ममाभावादप्रमाणा न च श्रुतिः ॥ राजाज्ञा च यथा लोके ह्न्यते न कदाचन । सर्वेशा या ममाज्ञा सा श्रुतिस्त्याज्या कथं नृभिः ॥ मदाज्ञारक्षणार्थन्तु ब्रह्म क्षत्रियजातयः ॥ मया सृष्टास्ततो ज्ञेयं रहस्यं मे श्रुतेर्वचः ॥ स्कन्ध ७ अध्या० ३९।१६ + २१ ॥ पुनश्चरकसंहितायाम् विमानस्थाने ॥ उपदेशः प्रत्यक्षानुमानञ्चेति ॥ अध्या० ४ ॥ आप्तोपदेशवेदादिः ॥ तेन गायत्र्या उपदेश एव वेद इति सिद्धम् ॥ येन प्रकारेण याज्ञवल्क्यादि ब्राह्मणानामुपदेशा वेदस्य द्वितीयभागाः ब्राह्मणग्रन्थाः बभूव, एवञ्च प्रकारेण सर्गस्यादौ गायत्र्या उपदेशा एक एव यजुर्वेदो बभूव ॥ तत्पश्चात् श्रीवेदव्यासो भगवान् पुरुषाणां वेदाध्ययने अल्पसामर्थ्यं ज्ञात्वा आत्मा वै जायते पुत्र इति न्यायेन गायत्र्या उपदेशस्य यजुर्वेदस्य तस्या ऋग्यजुस्सामादि नामानुसारेण चत्वारो भागाः कृताः ॥

ति गायत्रीतन्त्रे पट० ॥ तेनात्रोम्शब्देन वेद इति गृह्यते ॥ (धीमहि) चिन्तयामः (प्रश्नः) किं कृत्य ? ॥ (उत्तरम्) वेदाध्ययनमेव स्वधर्म्ममिति विचिन्त्य ॥ तत्र प्रमाणम् ॥ तत्र मानवधर्म्मशास्त्रे ॥ वेदमेव सदाभ्यस्येत्तपस्तप्यन् द्विजोत्तमः ॥ वेदाभ्यासो हि विप्रस्य तपःपरम उच्यते ॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ॥ सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ अध्या० २।१६६+१६८॥ अथ द्विजातीनां नैमित्तिकस्वाध्यायेषुनानध्याय इति स्पष्टीक्रियते ॥ तत्र मानवधर्म्मशास्त्रे ॥ वेदोपकरणच्चैव स्वाध्याये चैव नैत्यिके ॥ नानुरोऽधोस्त्यनध्याये होममन्त्रेषु चैव हि ॥ नैत्यकेनास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम् ॥ ब्रह्माहुतिहुतम् पुण्यमनध्याय वषट् कृतम् ॥ यः स्वाध्यायमधीतेऽब्दविधिना नियतः शुचिः ॥ तस्य नित्यं क्षरत्येष पयोदधिघृतं मधु ॥ [कथम्भूतम् वेदम् धीमहि ?] (भूर्भुवःस्वः) ऋग्यजुःसामादिसंज्ञकम् ॥ यद्वा (भूर्भुवःस्वः वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिः सेवनीयम् [पुनः कथम्भूतं वेदम्] (भर्गः) तेजःस्वरूपम् ॥ तत्र प्रमाणम् ॥ ऋग्वेद एव भर्गः ॥ गो० ब्रा०पू०५।१५ ॥ तेनात्र भर्गःशब्देन वेद इति सिद्धम्॥ (यः) यो गायत्र्या उपदेशो वेदः (नः) अस्माकम् द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥ यद्वा, यज्जगत्प्रसवित्र्या गायत्र्या ऋग्यजुः सामसंज्ञकमुपदेशम् वेदम् वयम् द्विजातयः नित्यं चिन्तयामः स च वेदः नोऽस्माकम् द्विजातीनाम् बुद्धीः धर्म्ममार्गेषु प्रेरयेत् ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रिती पञ्चयज्ञान्तर्गतं ब्रह्मयज्ञनिरूपणं चतुर्दशप्रकरणम् ॥ १४ ॥

—०—

अथ पञ्चदशार्थमाह ।

अन्वयः ॥ तदोम् धीमहि भूर्भुवःस्वर्वरेण्यम् भर्गो देवस्य सवितुर्यो नो धियः प्रचोदयात् ॥ १५ ॥

पदार्थः ॥ वयम् ब्राह्मणक्षत्रियवैश्यादयः (तदोम्) तद्वैदिकगायत्रीमन्त्रम् (धीमहि) चिन्तयामः, जपाम इत्यभिप्रायः [कथम्भूतमोम् ?] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिरुपासनीयम् [पुनः कथम्भूतमोम् ?] (भर्गः) तेजःस्वरूपम् [कस्मै प्रयोजनाय ?] (देवस्य) वेदस्य (सवितुः) यज्ञाय (यः) यो वैदिकमन्त्रः (नः) अस्माकम् द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति ॥ १५ ॥

भाष्यम् ॥ वयम् ब्राह्मणक्षत्रियवैश्यादयः (तदोम्) तद्वैदिकगायत्रीमन्त्रम् (धीमहि) चिन्तयामः, जपाम इत्यभिप्रायः [कथम्भूतमोम्] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिरुपासनीयम् जपनीयमित्यभिप्रायः [पुनः कथम्भूतमोम् ?] (भर्गः) तेजःस्वरूपम् ॥ तत्र प्रमाणम् ॥ भ्रुवोर्मध्ये मनोर्द्ध्वे च यत्तेजः प्रणवात्मकम् ॥ ध्यायेज्ज्वालावलीयुक्तं तेजो ध्यानं तदेव हि ॥ इति योगशास्त्रान्तर्गतघेरण्डसंहितायाम् ॥ उपदे० ६।१७॥ [कस्मै प्रयोजनाय धीमहि ?] (देवस्य) वेदस्य ॥ तत्र प्रमाणम् ॥ तद्दैवतः समन्त्रो भवति ॥ तास्त्रिविधा ऋचः, परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिकाश्चेति ॥ निरु० दै० अध्या० १ खं० १ ॥ पुनस्तत्रैव ॥ छन्दो देवता २।२१॥ तेनात्र देवशब्देन मन्त्रभागवेद इति सिद्धम् ॥

(सवितुः) यज्ञाय, वेदस्य यज्ञाय कोऽर्थः स्वाध्यायापन्नब्रह्मयज्ञायेत्यभिप्रायः ॥ अथ वैदिकगायत्रीमन्त्र एव द्विजातीनां श्रेष्ठः स्वाध्याय इति स्पष्टीक्रियते ॥ तत्र सर्वदर्शनसंग्रहान्तर्गतपातञ्जलदर्शने ॥ प्रणवगायत्रीप्रभृतीना माध्यय न स्वाध्याय इति ॥ ५५ ॥ (यः) यो वैदिकमन्त्रः, [उपलब्धात्] (नः) अस्माकम् द्विजातीनाम् (धियः) बुद्धीः [निर्म्मलीकृत्वा] (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥ यद्वा, वयम् ब्राह्मणक्षत्रियवैश्यादयः ब्रह्मयज्ञाय तदोम् गायत्रीमन्त्रं जपामि यो नो धियः प्रचोदयात् ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीमन्त्रमेव श्रेष्ठस्वाध्यायमिति वर्णनं पञ्चदशप्रकरणम् ॥ १५ ॥

—०—

अथ षोड़शार्थमाह ।

मनुष्याणां पितराविव प्रत्यक्षदेवते तदुपासना परमो धर्मः, तदेव गायत्रितो निर्दिश्यते ॥

अन्वयः ॥ देवस्य तद्भर्गो धीमहि सवितुर्भूर्भुवःस्वर्वरेण्यम् यो नो धियः प्रचोदयात् ॥ १६ ॥

पदार्थः ॥ (देवस्य) मातृपितृद्वयस्य "पितरौ" (तद्भर्गः) स्वरूपम् (धीमहि) ध्यायामः [कथम्भूतम् स्वरूपम्] (भूर्भुवःस्वर्वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिः सेवनीम् [कस्मै प्रयोजनाय?] (सवितुः) यज्ञाय (यः) यो मातृपितृस्वरूपम् (नः) अस्माकं मनुष्याणाम् (धियः)

बुद्धीः (प्रचोदयात्) व्यत्ययेन प्रचूचुदत् प्रेरयति वा ॥ १६ ॥

भाष्यम् ॥ वयम् मनुष्याः (देवस्य) जन्मदानादिगुणयुक्तस्य मातृपितृद्वयस्य ॥ तत्र प्रमाणम् ॥ देवा वा एते पितरः ॥ गो० ब्रा० उत्त० १।२४ ॥ पुनर्यास्कोऽप्याह ॥ बहुलं लोके देवदेवत्य-मतिथि देवत्यं पितृदेवत्यम् ॥ निरु० दै० १।४ ॥२॥ पुनस्तैत्तिरी-योपनिषदिशिक्षावल्ल्याम् ॥ मातृदेवो भव ॥ पितृदेवो भव ॥३॥ पुन-रौशनसंहितायाम् ॥ नास्ति मातृसमं दैवो नास्ति मातृसमो गुरुः ॥ अध्या० १।२६॥४॥ पुनर्महानिर्वाणोत्तरतन्त्रे ॥ मातरं पितरञ्चैव साक्षात् प्रत्यक्षदेवताम् ॥ उल्ला० ८।२५॥५॥ पुनर्महाभारतान्तर्गत-शान्तिपर्वणि ॥ पिता परं दैवत मानवानां मातुर्विशिष्टं पितरं वदन्ति ॥ अध्या० २९७।२॥६॥ पुनर्वाल्मीकीयरामायणे अयोध्या-काण्डे रामवाक्यम् ॥ पिता हि दैवतं तात देवतानामपि स्मृतम् ॥ तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ सं० ३४।५२॥७॥ तेनात्र देवशब्देन मातृपितृद्वयमिति सिद्धम् (तद्भर्गः) तत् स्वरूपम् (धीमहि) ध्यायामः ॥ (प्रश्नः) किं कृत्वा ? ॥ (उत्तरम्) स्वधर्ममनुचिन्त्य ॥ अथ मनुष्यैः सर्वदा मनोवाक् कायकर्मभिः पित्रोरुपासना कर्त्तव्येति स्पष्टीक्रियते ॥ तत्र मानवधर्मशास्त्रे ॥ आचार्य्यो ब्रह्मणो मूर्त्तिः पितामूर्त्तिः प्रजापतिः ॥ माता पृथिव्या मूर्त्तिस्तु भ्राता स्वो मूर्त्ति-रात्मनः ॥ आचार्य्यश्च पिता चैव माता भ्राता च पूर्वजः ॥ नार्तेना-प्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ यन्माता पितरौ क्लेशं सहेते सम्भवे नृणाम् ॥ न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ॥ तयो-र्नित्यं प्रियं कुर्य्यादाचार्य्यस्य च सर्वदा ॥ तेष्वेव त्रिषु तुष्टेषु तपः सर्वं

समापद्यते ॥ तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ॥ न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ॥ त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ॥ त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ पिता वै गार्हपत्याग्निर्माताग्निर्दक्षिणः स्मृतः ॥ गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान् विजयेद्गृही ॥ दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ॥ गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते ॥ सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ॥ अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ॥ तेष्वेव नित्यं शुश्रूषां कुर्य्यात् प्रियहिते रतः ॥ तेषामनुपरोधेन पारतंत्र्यं यद्यदाचरेत् ॥ तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः ॥ त्रिष्वेतेष्विति कृत्यं हि पुरुषस्य समाप्यते ॥ एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥ अध्या० २।२२५+२३७॥१॥ पुनर्विष्णुसंहितायाम् ॥ त्रयः पुरुषस्यातिगुरवो भवन्ति । माता पिता (१)आचार्य्यश्च । तेषां नित्यमेव शुश्रूषुणा भवितव्यम् । यत् ते ब्रूयुस्तत् कुर्य्यात् । तेषां प्रियहितमाचरेत् । न तैरननुज्ञातः किञ्चिदपि कुर्य्यात् । अध्या०३१।१+८॥२॥ पुनरौशनःसंहितायाम् ॥ उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ॥ मातुलश्वशुरस्त्रातृमातामहपितामहौ ॥ वर्णकाश्च पितृव्यश्च पञ्चैते पितरः स्मृताः ॥ माता मातामहीगुर्वी पितृमातृष्वसादयः ॥ श्वश्रूः पितामहीज्येष्ठा ज्ञातव्या गुरवः स्त्रियः ॥ अध्या० १।२५+२६ ॥ पुनस्तत्रैव ॥ यावत्पिता च माता च द्वावेतौ निर्विकारिणौ ॥ तावत् सर्वं परित्यज्य

(१) पितेति—पितर्लक्षणमाह ॥ पिता पाता वा पालयिता वा जनयितेति निरु० नै० ४।२१ ॥

पुत्रः स्यात्तत् परायणः ॥ पिता माता च सुप्रीतौ स्यातां पुत्रगुणै-र्यदि ॥ स पुत्रः सकलं कर्म्म प्राप्नुयात् तेन कर्म्मणा ॥ नास्ति मातृ-समं दैवं नास्ति पितृसमो गुरुः ॥ तयोः प्रत्युपकारोऽपि न हि कश्चन विद्यते ॥ तयोर्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा ॥ न ताभ्यामननुज्ञातो धर्म्ममिकं समाचरेत् ॥ वर्जयित्वा मुक्तिफलं नित्यनैमित्यकं तथा ॥ धर्मसारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥ अध्या० १।३३+३८ ॥ ३ ॥ पुनर्व्यासर्सहितायाम् ॥ मातापित्रोः परं तीर्थं गङ्गागावो विशेषतः ॥ अध्या० ४।१२ ॥ ४ ॥ पुनर्महा-निर्वाणोत्तरतन्त्रे ॥ मातरं पितरञ्चैव साक्षात्प्रत्यक्षदेवतम् ॥ मत्वा गृही निषेवेत सदा सर्वप्रयत्नतः ॥ तुष्टायां मातरि शिवे तुष्टे पितरि पार्वति ॥ तव प्रीतिर्भवेद्देवि परब्रह्म प्रसीदति ॥ त्वमा-द्यो जगतां माता पिता ब्रह्मपरात्परम् ॥ युवयोः प्रीणनं यस्मात्त-स्मात्किं गृहिणां तपः ॥ आसनं शयनं वस्त्रं पानं भोजनमेव च ॥ तत्तत् समयमाज्ञाय मात्रे पित्रे नियोजयेत् ॥ श्रावयेन्मृदुलां वाणीं सर्वदा प्रियमाचरेत् ॥ पित्रोराज्ञानुसारी स्यात् सत्पुत्रः (१) कुल-

(१) पुत्रेति—अथ द्वादशपुत्रा भवन्ति, यथा—(१) औरस, (२) क्षेत्रज, (३) पुत्रिका-पुत्र, (दौहित्र) (४) पौनर्भव, (५) कानीनक, (६) गूढोत्पन्न, (७) सहोढ, (८) दत्तक (९) क्रीत, (१०) स्वयमुपगत, (११) अपविद्ध, यत्र क्वचनोत्पादितश्च द्वादशः ॥ एतेषां पूर्वः श्रेयान् । स एव दायहारः । इति विष्णुसंहितायाम् ॥ अध्या० १५।सू० १+२९॥ पुन-र्मानवधर्मशास्त्रे ॥ पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥ दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पुत्रवत् ॥ अध्या० ९।१३९॥ कस्मात् पुत्रेत्युच्यते ॥ तत्र यास्केनोक्तम् ॥ पुत्रपुरुत्रायते निपरणाद्वा पुंनरकं ततस्त्रायत इति वा ॥ निरु० नै०२।११ ॥ पुनर्गोपथब्राह्मणे ॥ पुत्रः पुन्नाम नरक-मनेकशततारं तस्मात् त्राति पुत्रस्तत् पुत्रस्य पुत्रत्वम् ॥ पू० १।२॥ पुनर्मानवधर्मशास्त्रे ॥ पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ॥ तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवः ॥ अध्या० ९।१३८॥ तस्य लक्षणमाह ॥ प्रतिकूलपितुर्यश्च न स पुत्रः सतां मतः ॥ माता पित्रो-

वावन: ॥ औद्धत्यं परिहासञ्च तर्जनं परिभाषणम् ॥ पित्रोरग्रे न कुर्वीत यदीच्छेदात्मनो हितम् ॥ मातरं पितरं वीक्ष्य नित्योत्तिष्ठेत् ससम्भ्रमः ॥ विनाज्ञया नोपविशेत् संस्थितः पितृशासने ॥ विद्याधनमदोन्मत्तो यः कुर्य्यात् पितृहेलनम् ॥ स याति नरके घोरे सर्वधर्म्मबहिष्कृतः ॥ ब्रह्मा० ८।२५×८२ ॥ पुनस्तत्रैव ॥ सन्तुष्टौ पितरौ यस्मिन्ननुरक्तो सुहृद्गणाः ॥ गायन्ति यद्यशो लोकास्तेन लोकत्रयं जितम् ॥ ब्रह्मा० ८।६४ ॥ ५ ॥ पुनर्म्महाभारतान्तर्गतशान्तिपर्वणि ॥ पिता धर्म्मः पिता स्वर्गः पिता हि परमं तपः ॥ पितरि प्रीतिमापन्ने सर्वाः प्रीयन्ति देवताः ॥ अध्या० २६५।२० ॥ पुनस्तत्रैव ॥ नास्ति मातृसमाच्छाया नास्ति मातृसमा गतिः ॥ नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया ॥ २६५।३० ॥ पुनस्तत्रैवानुशासनपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ मातरं पितरञ्चैव यस्तु पुत्रोऽवमन्यते ॥ सोऽपि राजन् मृतो जन्तुः पूर्वं जायेत गर्द्दभः ॥ १११।५७ ॥ ६ ॥ अतएव मनुष्यैः पित्रोरुपासनामनोवाक्कायकर्म्मभिः सर्वदा कर्त्तव्येति सिद्धम् ॥ [कथम्भूतं स्वरूपम् ?] (भूर्भुवःस्वः वरेण्यम्) ब्राह्मणक्षत्रियवैश्यादिभिः सेवनीयम् ॥ [कस्मै प्रयोजनाय ?] (सवितुः) यज्ञाय, पितृयज्ञाय वा तत्र प्रमाणम् ॥ तत्र गोपथब्राह्मणे उत्तरार्द्धे ॥ अथ यदपराह्णे पितृयज्ञेन चरन्ति, अपराह्णभाजो वै पितरः तस्मादपराह्णे पितृयज्ञेन चरन्ति ॥ १।२४ ॥ पुनर्मानवधर्म्मशास्त्रे ॥ कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ॥ पयोमूलफलैर्वापि पितृभ्यः

---

वैचनकृद्धितः पर्य्येष यः सुतः ॥ स पुत्रः पुत्रवद्यश्च वर्त्तते पितृमातृषु ॥ इति महाभारतान्तर्गतादिपर्वणि ययातिवाक्यम् ॥ अध्या० ८५।२४ + २५ ॥

प्रीतिमावहन् ॥ अध्या० ३।८२ ॥ (यः) यत्पितृमातृद्वयस्वरूपम् (नः) अस्माकं मनुष्याणाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु अचूचुदत् प्रेरयति वा ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितौ पितृयज्ञनिरूपणं षोडशप्रकरणम् ॥१६॥

—०—

अथ सप्तदशार्थमाह ॥

अथ गृहस्थानामग्निहोत्रमपि परमो धर्मस्तत्प्रतिपादकार्थमाह ॥

अन्वयः ॥ सवितुस्तद्भर्गो धीमहि वरेण्यम् देवस्य भूः ओम् भुवः स्वर्यो नो धियः प्रचोदयात् ॥१७॥

पदार्थः ॥ वयम् द्विजातयः (सवितुः) यज्ञस्य (तद्भर्गः) तत्तेजो गायत्र्याः स्वरूपमग्निम्॥ (धीमहि) ध्यायामः धारयामः वा [कथम्भूतम् तेजः?] (वरेण्यम्) श्रेष्ठम् [कस्मै प्रयोजनाय ?] (देवस्य) व्यत्ययेन देवाय यज्ञाय, कोऽर्थो देवयज्ञाय [कस्मिन् स्थाने धीमहि ?] ( भूः ) पृथिव्याम् वेदीषु यज्ञकुण्डे वा [केधीमहि] (ओ३म्) अ-उ-म् ऋग्यजुःसामादिवेदमन्त्रैः [किं कृत्वा?] (भुवः) व्यानादिवायून् निरुध्य, [कथम्भूतस्य सवितुर्यज्ञस्य ?] (स्वः) स्वर्गफलप्रदायकस्य ॥ (यः) यो यज्ञः (नः) अस्माकम् द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥ १७ ॥

भाष्यम् ॥ वयम् यज्ञाधिकारिणो द्विजातय: (सवितु:) यज्ञस्य (तद्भर्ग:) तत्तेजो, गायत्र्या: स्वरूपमग्निम् ॥ तत्र प्रमाणम् ॥ अग्निरेव भर्ग:, गायत्र्येव भर्ग: ॥ गोपथब्राह्मणे ॥ पू० ५।१५ ॥ पुन ऋग्वेदे ॥ त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वेधसे गिरा ॥ त्वमिळा शत हिमासि दक्षसे त्वं वृत्रहा वसुपते सरस्वती [गायत्री] ॥ २।१।१८।२।१।२।११ ॥ २ ॥ पुन: कृष्णयजुर्वेदे ॥ अष्टाक्षरा गायत्री गायत्रोऽग्निपावने वाऽग्निस्त० सम्भरति ॥ का० ५। प्रपा० १। अ०५कं०५ ॥३॥ पुनस्तत्रैव ॥ तेजो गायत्री गायत्री यज्ञमुखं तेजसैव गायत्रियायज्ञमुखेन संमित: ॥ ६।२।४।६ ॥ पुनर्भृङ्गीशतन्त्रे ॥ लक्षणं तस्य देव्यास्तु यथा शास्त्रेषु निश्चितम् ॥ मुखमग्निरितस्तस्य पूर्वो देव: सदा शिव: ॥ ४ ॥ पुनर्देव्याथर्वशीर्षे ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ॥ ५ ॥ पुनर्गोपथब्राह्मणे ॥ सोऽग्निर्देवयोनि: ऋङ्मयो यजुर्मय: साममयो ब्रह्ममयोऽमृतमयो आहुतिमय: सर्वेन्द्रिय: सम्पन्नो यजमान ऊर्ध्वं स्वर्गं लोकमेति ॥ उत्त० २।६ ॥ ६ ॥ पुनर्गान्धर्वतन्त्रे ॥ अग्निहोत्रं सदा कुर्य्यात्तस्मादग्निमयीश्वरी ॥ पट०१७ ॥ पुनस्तत्रैव ॥ अग्निरेव मुखं देव्या तस्मादग्नौ हुनेत् सदा ॥७॥ पुनर्देवीपुराणे ॥ सर्वाशिनि सर्वगते पावकाय नमो नम: ॥ दुर्गाय उमारूपाय स्त्रीलिङ्गाय सुतेजसे॥ अध्या०२६॥८॥ तेनात्र भर्गशब्देनाग्निस्वरूपा गायत्रीति सिद्धम् ॥ (धीमहि) ध्यायाम: धारयाम: वा ॥ अथ भुक्तिमुक्त्यभिलाषिभि: पुरुषैर्यज्ञे गायत्रेर वावाहनीया सर्वदेवश्रेष्ठत्वादिति स्पष्टीक्रियते ॥ पावकान: सरस्वती वाजेभिर्वाजिनीवती यज्ञं वष्टु धिया वसु: ॥ यजु०अध्या०२०मं०८४॥पुनर्महाभारतान्तर्गतशान्तिपर्वणि ॥ ततस्तु यज्ञे सावित्रीं साक्षात्तं सम्-

मन्त्रयेत् ॥ निमन्त्रयन्तो प्रत्युक्तां न हन्यां सहवासिनम् ॥ अध्या० २७।११ ॥ १ ॥ पुनर्देवीपुराणे ॥ एकाहे अपि यो देवीं कल्पयित्वा हुताशने (१) ॥ पातयेत् सर्पिषाधारां स लभेतेप्सितं फलम् ॥ अध्या० २५।२ ॥ [कथम्भूतम् तेजो गायत्र्याः स्वरूपमग्निम् ?] (वरेण्यम्) श्रेष्ठम् ॥ तत्र प्रमाणम् ॥ अग्निं वरेण्यमापोवरेण्यमिति सावित्र्युपनिषदि [कस्मै प्रयोजनाय धीमहि ?] (देवस्य) व्यत्ययेन देवाय कोऽर्थः यज्ञाय ॥ तत्र प्रमाणम् ॥ यद्देवता स यज्ञो वा यज्ञाङ्गो वा तद्देवता भवति ॥ निरु० दै० १।४॥ अतएव देवत्र-त्वेन यज्ञ इति सिद्धम् तेन देवा यज्ञाय, अग्निहोत्राय वा ॥ अथ द्विजातिभिः स्वाध्यायात् प्राणाग्निहोत्रादियज्ञकार्य्यं कर्त्तव्यमिति स्पष्टीक्रियते ॥ तत्र गोपथब्राह्मणे ॥ अथ यदग्निमनीकवन्तं प्रथमं देवानां यजति, अग्निर्वै देवानां मुखं (२) मुखत एव तद्देवान्

---

(१) देवीं कल्पयित्वा हुताशन इति—देवीं गायत्रीं हुताशने कल्पयित्वेति भावः ॥

(२) अग्निर्वै देवानां मुखमिति—त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट् ॥ इति महाभारतान्तर्गतोद्योगपर्वणि ॥ अध्या० १५।१॥ अथ कर्मानुसारतोऽग्निनामानि निर्दिश्यन्ते ॥ तत्र देवीपुराणे ॥ आधाने भरतो ह्यग्निर्वरः पुंसवने स्मृतः ॥ सीमन्ते मङ्गलो नाम जातकर्मो वसुः स्मृतः ॥ नाम्नि बलः समाख्यातः प्राशने अङ्गिरा मतः ॥ चूडे समुद्भवो वह्निर्जयो व्रतनिबन्धने [उपनयनकाले] ॥ रुद्रोगौदानिको नाम विवाहे संयुगः स्मृतः ॥ अग्निश्च व्याखिका नाम अग्निहोत्रे विधीयते ॥ आवसथ्ये भवो ज्ञेयः पितृणां विश्वदेवकः ॥ अनलो जठरो ह्यग्निः कल्मषोऽमृतभक्षणे ॥ सूर्य्यो वह्निर्महाहोमे जलो जलनिवेशने ॥ ग्रहाङ्गः पूर्णिमाहोमे चरौ संवर्त्तको मतः ॥ घोरः काष्ठसमुत्थश्च परान्तो वेणुसम्भवः ॥ समुद्रे वडवाग्निस्तु दवः पाकविधौ मतः ॥ निधीशो वसुधारायां कामदेवोऽथ धूपजः ॥ तुषजः का महालग्नौ रथ्यायान्तु परान्तकः ॥ विभतसुः चुल्कारो वह्निर्विजयी नृपगेहजः ॥ धूमो वृक्षसमुत्थस्तु दीपे कृष्णपथो मतः ॥ हेमन्तापे भवेद्वाय अजितो मातृवेश्मगः ॥ मङ्गरी म्लेच्छलोकेषु सङ्गी वै चेष्टपाकजः ॥ दिक्षे शुद्धि विजानीयाज्जयः शुक्रनिवेशने ॥ अध्या० १२३ ॥

प्रीणाति ॥ उत्तरा०१।२३॥१॥ पुनर्न्नारायणोपनिषदि ॥ अग्निहोत्रं सायंप्रातर्गृहाणां निष्कृतिः स्विष्टꣳ सुहुतं यज्ञक्रतूनां प्रयाणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति ॥ ७९॥२॥ पुनर्म्मानवधर्म्मशास्त्रे ॥ अग्निहोत्रञ्च जुहुयादाद्यन्ते द्युनिशोः सदा ॥ दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि ॥ अध्या० ४। २५॥२॥ पुनर्म्महाभारतान्तर्गतसभापर्वणि युधिष्ठिरं प्रति नारदवाक्यम् ॥ अग्निहोत्रफलावेदाः दत्तभुक्तफलं धनम् ॥ अध्या० ५। ११२ ॥ पुनर्देवीपुराणे शुक्रब्रह्मणो संवादे ॥ प्रातर्मध्याह्नसन्ध्यासु सर्वकामसमृद्धये ॥ वसुद्रव्यं घृतमाज्यं अमृतं हविकामिकम् ॥ तस्य धारा सदा देया वसोर्द्धारा हि सा मता ॥ वसुना स्वर्गकामेन दत्तेण च महात्मनाम् ॥ मया च विष्णुना शक्ररुद्रेण च सहोमया ॥ आत्मानञ्च स्वरूपेण (१) धारायान्तु प्रदापयेत् ॥ देवी सानिध्यमायाति सर्वकामप्रदायिका ॥ तस्मात् त्वमपि राजेन्द्र वसोर्द्धारां प्रपातय ॥ नातः परतरं पुण्यं विद्यते नृपसत्तम ॥ अध्या० २१॥२ ॥ [ कस्मिन् स्थाने यज्ञस्य तेजो गायत्र्याः स्वरूपमग्निं धीमहि ?] (भूः) पृथिव्याम् वेदीषु यज्ञकुण्डे वा ॥ तत्र प्रमाणम्॥ भूरिति पृथिवी नाम सुपठितम् ॥ निघ० अध्या० १ खं० १ ॥ पुनर्देवीपुराणे ॥ पुष्पेषु ऋतवो विद्धि पात्रेषु च महोदधि ॥ वेदी मध्ये तु गयत्री सोमो अभ्युक्षणे स्थितः ॥ अध्या० १२१॥ [कैर्धीमहि ?] (ओम्-अ-उ-म्) ऋग्यजुःसामादिवेदमन्त्रैरिति भावः ॥ [किं कृत्वा ?] (भुवः) व्यानादिवायून् निरुध्य, प्राणायामं कृत्वेति भावः ॥ [ कथम्भूतस्य यज्ञस्य ? ] (स्वः) स्वर्गफलदायकस्य ॥

---

(१) आत्मानञ्च स्वरूपेण—गायत्री स्वरूपेणेति भावः ॥

तत्र प्रमाणम् ॥ यत् स्वरित्याह स्वर्गो हि लोकः ॥ श० ब्रा० ८।१।२।४ ॥ (यः) यो यज्ञः (नः) अस्माकं द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये यज्ञस्वरूपगायत्रीविवर्णनं सप्तदशप्रकरणम् ॥ १७ ॥

—०—

अथ अष्टादशार्थमाह ।

अन्वयः ॥ भूः भुवः स्वस्तत् सवितुर्देवस्य भर्गो वरेण्यम् ओम् भूर्धीमहि यो नो धियः प्रचोदयात् ॥ १८ ॥

पदार्थः ॥ वयम् द्विजातयः (भुवः) प्राणायामं कृत्वा (स्वः) स्वर्गस्य (सवितुः) ऐश्वर्य्याय (तद्देवस्य) तदिन्द्रियादेः (भर्गः) वीर्य्यम् (वरेण्यम्) अन्नम् (ओम्) अ-उ-म् वेदमन्त्रैः । यद्वा प्रणवैः (भूः) अग्निषु (धीमहि) धारयामः, समर्पयामः (यः) यदन्नम् (नः) अस्माकं मनुष्याणाम् (धियः) बुद्धीः (प्रचोदयात्) सृष्टिकार्य्येषु प्रेरयति ॥ १८ ॥

भाष्यम् ॥ वयम् द्विजातयः (भुवः) प्राणायामं कृत्वा (स्वः) स्वर्गस्य (सवितुः) ऐश्वर्य्याय (तद्देवस्य) तदिन्द्रियादेः (भर्गः) वीर्य्यम् (वरेण्यम्) अन्नम् ॥ तत्र प्रमाणम् ॥ वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः ॥ गो० ब्रा० पू० १।३२ ॥ तेनात्र वरेण्यशब्देनान्नमिति गृह्यते ॥ (ओम्) अ-उ-म् वेदमन्त्रैः, यद्वा प्रणवैः (भूः) [भूः-स्त्री०-भू-सम्प० क्विप-यज्ञाग्नौ] अग्निषु (धीमहि) धारयामः, अग्नि-

स्वरूपायै गायत्र्यै समर्पयामीति भावः ॥ (यः) यदग्नम् (नः) अस्माकम् मनुष्याणाम् (धियः) बुद्धीः प्रचोदयात्) सृष्टिकार्य्ये (१) प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीतो देवयज्ञाहुतिदानवर्णनं अष्टादशप्रकरणम् ॥ १८ ॥

—०—

अथ बलिवैश्वदेवप्रतिपादकोनविंशार्थमाह ।

अन्वयः ॥ देवस्य सवितुस्तद्वरेण्यम् भर्गो धीमहि भूर्भुवःस्वर्यो नो धियः प्रचोदयात् ॥ १९ ॥

पदार्थः ॥ वयम् ब्राह्मणादयः (देवस्य) वैश्वदेवस्य (सवितुः) व्यत्ययेन यज्ञाय (तद्वरेण्यम्) तच्छ्रेष्ठमुपासनीयम् वा (भर्गः) गायत्र्याः स्वरूपमग्निम् (धीमहि) ध्यायामः [कुत्र स्थाने ?] (भूः) पृथिव्याम् स्थण्डिले यज्ञकुण्डे वा [किं कृत्वा ?] (भुवः) व्यानादिप्राणवायून् निरुध्य [कस्य हेतोः ?] (स्वः) स्वर्गस्य (यः) यज्ञायत्र्याः स्वरूपोऽग्निः (नः) अस्माकं द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥१९॥

भाष्यम् ॥ वयम् गृहस्थाः ब्राह्मणादयः (देवस्य) वैश्वदेवस्य

(१) सृष्टिकार्य्येति—अन्नं भुक्त्वा मनुष्याः सृष्टिकार्य्ये प्रवर्त्तन्ते इति भावः ॥ तत्र प्रमाणम् ॥ अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति ॥ इति तैत्तिरीयोपनिषदि भृगुवल्ल्याम् ॥

(सवितुः) यज्ञाय (तद्वरेण्यम्) तच्छ्रेष्ठमुपासनीयं वा (भर्गः) गायत्र्याः स्वरूपमग्निम् (धीमहि) ध्यायामः धारयामः, स्थापयाम इति भावः [कुत्र स्थाने ?] (भूः) पृथिव्याम्, स्थण्डिले यज्ञकुण्डे वा [किं कृत्वा ?] (भुवः) व्यानादीन् प्राणवायून् निरुध्य, प्राणायामं कृत्वेत्यर्थः [कस्य हेतोः ?] (स्वः) स्वर्गस्य (यः) यज्ञायत्र्याः स्वरूपोऽग्निः (नः) अस्माकं द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रीती बलियज्ञनिरूपणमूलर्विंशप्रकरणम् ॥१९॥

—०—

अथ नृयज्ञस्य प्रतिपादकविंशार्थमाह ॥

अन्वयः ॥ देवस्य तद्वरेण्यम् भर्गो धीमहि भूर्भुवः-स्वः सवितुर्यो नो धियः प्रचोदयात् ॥ २० ॥

पदार्थः ॥ वयम् ब्राह्मणक्षत्रियवैश्यादयः गृहस्थाः (देवस्य) उपदेशप्रदानादिगुणयुक्तस्यातिथेः (तद्वरेण्यम्) तत्सेवनीयम् (भर्गः) तेजःस्वरूपम् (धीमहि) ध्यायेम [कथम्भूतमतिथेः स्वरूपम् ?] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यादिसंज्ञकम् [कस्मै प्रयोजनाय ?] (सवितुः) यज्ञाय, अतिथियज्ञायेति भावः ॥ (यः) योऽतिथिः (नः) अस्माकं गृहस्थानाम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरति ॥ २० ॥

भाष्यम् ॥ वयम् ब्राह्मणक्षत्रियवैश्यादयः गृहस्थाः ( देवस्य ) उपदेशप्रदानादिगुणयुक्तस्यातिथेः ॥ तत्र प्रमाणम् ॥ अतिथिदेवो भव ॥ इति तैत्तिरीयोपनिषदि शिक्षाध्याये वल्ली ॥१॥ पुनर्महाभारतान्तर्गतानुशासनपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै ॥ ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय ॥ अध्या० २।९१ ॥ (तद्वरेण्यम्) तत्सेवनीयम् (भर्गः) तेजःस्वरूपम् (धीमहि) ध्यायामः [कथम्भूतमातिथेः स्वरूपम् ? ॥] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यादिसंज्ञकम् [कस्मै प्रयोजनाय ?] (सवितुः) यज्ञाय, अतिथियज्ञायेति भावः ॥ अथ गृहस्थानामतिथिपूजनमेव प्रत्यक्षदेवपूजनमिति स्पष्टीक्रियते ॥ तत्र मानवधर्मशास्त्रे ॥ कृत्वैतद्बलिकर्मैवमतिथिम् पूर्वमाशयेत् ॥ भिक्षाञ्च भिक्षवे (१) दद्याद्विधिवद्ब्रह्मचारिणे ॥ अध्या० ३।९४ ॥ पुनस्तत्रैव ॥ सम्प्राप्ताय चातिथये प्रदद्यादासनोदके ॥ अन्नञ्चैव यथाशक्ति सत्कृत्य (२) विधिपूर्वकम् ॥ शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ॥ सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥ पुनस्तत्रैव ॥ अप्रणोद्योऽतिथिः सायं सूर्य्योढो गृहमेधिना ॥ काले प्राप्तस्त्वकाले वा नास्या नश्नन् गृहे वसेत् ॥ न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् ॥ धन्यं यशस्यमायुष्यं स्वर्ग्यं वातिथिपूजनम् ॥ आसनावसथौ शय्यामनुव्रज्यामुपासनम् ॥ उत्तमेषूत्तमं कुर्य्याद्धीनं हीने समे समम् ॥ अध्या० ३।

(१) भिक्षवे इति। भिक्षोर्लक्षणमाह ॥ ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ॥ अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ अत्रिसंहिता अध्या० १।१६२॥

(२) सत्कृत्येति—सत् सत्कारं सादरं कृत्वेति भावः ॥

१०५+१०७॥ १ ॥ पुनरत्रिसंहितायाम् ॥ अग्निहोत्रं तपः सत्यं वेदानाञ्चैव पालनम् ॥ आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥ अध्या० १।४३॥२॥ पुनर्विष्णुसंहितायाम् ॥ अतिथिपूजने च परमधितिष्ठेत् ॥ सायमतिथिं प्राप्तं प्रयत्नेनार्चयेत् ॥ अनर्चितमतिथिं गृहे न वासयेत् ॥ यथा वर्णानां ब्राह्मणः प्रभुर्यथा स्त्रीणां भर्त्ता तथा गृहस्थस्यातिथिः ॥ तत्पूजायां स्वर्गमाप्नोति ॥ अध्या० ६७सू० २८+ ३२॥३॥ पुनः हारीतसंहितायाम् ॥ अतिथीनागतान् हुत्वा पूजयेदविचारतः ॥ अध्या० १।२७॥४॥ पुनर्याज्ञवल्क्यसंहितायाम् ॥ अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ॥ अध्या० १।११३॥५॥ पुनः शङ्खसंहितायाम् ॥ गृहस्थ एव यजते गृहस्थस्तप्यते तपः ॥ दाता चैव गृहस्थः स्यात् तस्मात् श्रेष्ठो गृहाश्रमी ॥ यथा भर्त्ता प्रभुः स्त्रीणां वर्णानां ब्राह्मणो यथा ॥ अतिथिस्तद्वदेवास्य गृहस्थस्य प्रभुः स्मृतः ॥ अध्या० ५।६+७॥ पुनस्तत्रैव ॥ न यज्ञैर्दक्षिणाभिश्च वह्निशुश्रूषया न च ॥ गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात् ॥ तस्मात् सर्वप्रयत्नेन गृहस्थोऽतिथिमागतम् ॥ आहारशयनाद्येन विधिवत्परिपूजयेत् ॥ अध्या० ५।१२+१३ ॥ ६ ॥ पुनर्लिखितसंहितायाम् ॥ आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥ अध्या० १।५ ॥ ७ ॥ पुनर्दक्षसंहितायाम् ॥ देवतातिथिभक्तश्च गृहस्थः स तु धार्मिकः ॥ दया लज्जा क्षमा श्रद्धा प्रज्ञा योगः कृतज्ञता ॥ एते यस्य गुणाः सन्ति स गृही मुख्य उच्यते ॥ अध्या० २।५० ॥ ८ ॥ पुनर्महानिर्वाणोत्तरतन्त्रे ॥ न मिथ्या भाषणं कुर्य्यान्न च शाठ्यं समाचरेत् ॥ देवतातिथिपूजासु गृहस्थो निरतो भवेत् ॥ उल्ला० ८।२४ ॥ ९ ॥ पुनर्महाभारतान्तर्गतशान्तिपर्वणि ॥ पूजयेदतिथीन् भृत्यान् स राज्ञो धर्म्म उच्यते ॥ अध्या० ९१।४० ॥ पुनस्तत्रैवानु-

शासनपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ गृहस्थस्य हि धर्मोऽग्र्यः संप्राप्तोऽतिथिपूजनम् ॥ अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ॥ नान्यस्तस्मात्परो धर्म्म इति प्राहुर्मनीषिणः ॥ प्राणा हि मम दाराश्च यच्चान्यद्विद्यते वसु ॥ अतिथिभ्यो मया देयमिति मे व्रतमाहितम् ॥ अध्या० २।६९+७१ ॥ १० ॥ (प्रश्नः) कस्मादतिथिरित्युच्यते ? ॥ (उत्तरम्) अतिथिरभ्यतितो गृहाङ्गवत्यभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा ॥ निरु० नै० ४।५ ॥ १ ॥ पुनर्म्मानवधर्म्मशास्त्रे ॥ एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ॥ अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ अध्या० ३।१०२ ॥ २ ॥ पुनर्म्महाभारतान्तर्गतानुशासनपर्वणि ॥ अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ अध्या० ९७।१९ ॥ ३ ॥ (प्रश्नः) कस्मादतिथिपूजनीयः ? ॥ (उत्तरम्) पोष्यत्वात् ॥ तत्र प्रमाणम् ॥ तत्र दक्षसंहितायाम् ॥ पिता माता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः ॥ अभ्यागतोऽतिथिश्चाग्नः पोष्यवर्ग उदाहृतः ॥ अध्या० २।२९ ॥ (प्रश्नः) कीदृशोऽतिथिरुपासनीयः ? ॥ (उत्तरम) देवभावेन युक्तः विद्यादिगुणविशिष्टः ॥ तत्र प्रमाणम् ॥ तत्र व्याससंहितायाम् ॥ विद्याविनयसम्पन्ने ब्राह्मणे गृहमागते ॥ क्रीडन्त्योषधयः (१) सर्वा यास्यामः परमाङ्गतिम् ॥ नष्टशौचव्रतभ्रष्टे विप्रे वेदविवर्जिते ॥ दीयमानं रुदत्यन्नं भयाद् वै दुष्कृतं कृतम् ॥ प्रीतिपूर्णमुखं विप्रं सुभक्तमपि भोजयेत् ॥ न च मूर्खनिराहारं षड्रात्रमुपवासिनम् ॥ अध्या० ४।५०+५२ ॥ (यः) यदतिथिः

---

(१) ओषधय इति—ओषधिशब्देनान्नमिति बोद्धव्यम् ।

(नः) अस्माकं गृहस्थानाम् (धियः) बुद्धीः (प्रचोदयात्) स्वोपदेशाद्धर्ममार्गेषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितो नृयज्ञनिरूपणं विंशप्रकरणम् ॥ २० ॥

—०—

अथैकविंशार्थमाह ॥

यज्ञान्ते द्विजातिभिरन्नदानादिभिर्ब्राह्मणास्तोषितव्यास्तदेव गायत्रितो निर्दिश्यते ॥

अन्वयः ॥ स्वस्तद्देवस्य भुवः सवितुर्भर्गो वरेण्यम् धीमहि भूर्यो नो धियः प्रचोदयात् ॥ २१ ॥

पदार्थः ॥ वयम् द्विजातयः (स्वः) स्वर्गाय (तद्देवस्य) तद्विदुषो ब्राह्मणस्य (भुवः) हस्तेषु (सवितुः) धनस्य (भर्गः) तेजः (वरेण्यम्) अन्नम् (धीमहि) धारयामः, ददामीति भावः [ कथम्भूतस्य ब्राह्मणस्य ? ] (भूः) अग्निवज्ज्वाज्वल्यमानस्य (यः) यो नो ब्राह्मणः (नः) अस्माकं गृहस्थानाम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति ॥ २१ ॥

भाष्यम् ॥ वयम् द्विजातयः (स्वः) स्वर्गाय (तद्देवस्य) तद्विद्याप्रदानादिगुणयुक्तस्य विदुषो ब्राह्मणस्य (भुवः) हस्तेषु ॥ तत्र प्रमाणम् ॥ भुव इति बाहू ॥ इति बृहदारण्योपनिषदि ॥ ७।५।४॥ तेनात्र भुवःशब्देन हस्त इति गृह्यते ॥ (सवितुः) धनस्य ॥ तत्र प्रमाणम् ॥ सवितं धनं भवतीति निरु० दै० १।८॥ तेनात्र सवितुः शब्देन धनमिति सिद्धम् ॥ (भर्गः) तेजः (वरेण्यम्) अन्नम्

(धीमहि) धारयामि, ददामीति भाव: [कथम्भूतस्य ब्राह्मणस्य ?] (भूः) अग्निवद्ब्रह्मवर्चसादि(१)तेजसा जाज्वल्यमानस्य ॥ तत्र प्रमाणम् ॥ ब्राह्मणं भवत्यग्निः सर्वा देवतेति ॥ निरु०दै०१।१७ ॥ पुनर्महाभारतान्तर्गत आदिपर्वणि ॥ यस्ते कण्ठमनुप्राप्तो निगीर्णं वडिशं यथा ॥ दहेदङ्गारवत् पुत्र तं विद्या ब्राह्मणर्षभम् ॥ अध्या०२८।१०॥२॥ पुनर्वाल्मीकीयरामायणे बालकाण्डे ॥ अभ्यागच्छन् महातेजा विश्वामित्रो महामुनिः ॥ स० १८।३८॥ पुनस्तत्रैवारण्यकाण्डे ॥ एवमुक्त्वा महाबाहुरगस्त्यं सूर्य्यवर्चसम् ॥ जग्राहापततस्तस्य पादौ च रघुनन्दनः ॥ स० १२।२४॥३॥ तेनात्र भूःशब्देनाग्निवज्जाज्वल्यमान ब्राह्मण इति गृह्यते ॥ अथ गृहस्थैः विद्या ब्रह्मवर्चसादितेजःपुञ्जयुक्तेभ्योऽन्नं सदैव दातव्यमिति स्पष्टीक्रियते ॥ तत्र गोपथब्राह्मणे ॥ योऽह वा एवं विद्वानश्नाति च पिबति वाक् तेन तृप्यति, वाचि तृप्तायामग्निस्तृप्यत्यग्नौ तृप्ते पृथिवी तृप्यति, पृथिव्यां तृप्तायां यानि पृथिव्यानि भूतान्यन्वायत्तानि तानि तृप्यन्ति ॥ पू०३।१४॥१॥ पुनर्मानवधर्म्मशास्त्रे ॥ श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ॥ अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥ अध्या०३।१२८॥ पुनस्तत्रैव ॥ ज्ञानोत्कृष्टाय देयानि कव्यानि च च हवींषि च ॥ न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥ अध्या० ३।१३२ ॥ पुनर्महाभारतान्तर्गतानुशासनपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ अन्नतः सर्वमेतद्धि यत् किञ्चित् स्थाणु जङ्गमम् ॥ त्रिषु लोकेषु धर्मार्थमन्नं देय-

---

(१) ब्रह्मवर्चसादीति—जायमानो ह वै ब्राह्मणः सप्तेन्द्रियाण्यभिजायन्ते, ब्रह्मवर्चसञ्च यशश्च स्वप्नञ्च क्रोधञ्च श्लाघाञ्च रूपञ्च पुण्यमेव गन्धं सप्तममिति गोपथब्राह्मणे ॥ पू०२।२॥

मतो बुधैः ॥ अन्नदस्य मनुष्यस्य बलमोजो यशांसि च ॥ कीर्त्तिश्च वर्द्धते शश्वत्त्रिषु लोकेषु पार्थिव ॥ अध्या०६३।२४+२५॥ पुनस्तत्रैव ॥ अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परा मता ॥ अन्नात् प्राणः प्रभवति तेजो वीर्य्यं बलं यथा ॥ ६६।५८॥ पुनस्तत्रैव ॥ अन्नाद्बलञ्च तेजश्च प्राणिनां वर्द्धते सदा ॥ अन्नदानमतस्तस्मात् श्रेष्ठमाह प्रजापतिः ॥ ६६।६॥ पुनस्तत्रैव ॥ न्यायेनैवाप्तमन्नन्तु नरो हर्षसमन्वितः ॥ द्विजेभ्यो वेदविद्भ्यो दत्त्वा पापात् प्रमुच्यते ॥ सतां पन्थानमावृत्य सर्वपापैः प्रमुच्यते ॥ ११२।२२+२३ ॥ (यः) यो ब्राह्मणः (नः) अस्माकं गृहस्थानाम् (धियः) बुद्धीः (प्रचोदयात्) स्वोपदेशेन धर्म्ममार्गेषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितोऽन्नदानविधिवर्णनमेकविंशप्रकरणम् ॥ २१ ॥

---

अथ द्वाविंशार्थमाह ।

अन्वयः ॥ सवितुर्देवस्य स्वस्तद्वरेण्यम् भर्गो ओम् भूर्भुवो धीमहि यो नो धियः प्रचोदयात् ॥ २२ ॥

पदार्थः ॥ वयम् ब्राह्मणक्षत्रियवैश्याः स्व (सवितुः) उत्पादकस्य (देवस्य) पितुः (स्वः) स्वर्गाय (तद्वरेण्यम्) तच्छ्रेष्ठम् (ओम्) अन्नम् (भूः) अग्निवज्ज्वाज्वल्यमानस्य ब्राह्मणस्य (भुवः) हस्तेषु (धीमहि) धारयामः, ददाम इति भावः [कथम्भूतमन्नम् ?] (भर्गः) तेजःस्वरूपम् (यः) यदन्नम् (नः) अस्माकम् (धियः) बुद्धीः, (प्रचोदयात्) प्रेरयति ॥ २२ ॥

भाष्यम् ॥ वयम् ब्राह्मणक्षत्रियवैश्याः स्व (सवितुः) उत्पादकस्य (देवस्य) पितुः (स्वः) स्वर्गाय (तद्वरेण्यम्) तच्छ्रेष्ठम्(१) (ओम्) अन्नम् ॥ तत्र प्रमाणम् ॥ ओमिति ब्रह्मेति ॥ तैत्ति० उप० ८। १॥ अन्नं ब्रह्मेति ॥ बृहदा० उप० ७।१२।१॥ तेनात्र ओम्शब्देनान्नमिति गृह्यते ॥ (भूः) अग्निवज्ज्वाज्वल्यमानस्य ब्राह्मणस्य (भुवः) हस्तेषु (धीमहि) धारयामः, ददाम इति भावः [कथम्भूतमन्नम् ?] (भर्गः) तेजःस्वरूपम् (प्रश्नम्) किंविधब्राह्मणहस्तेष्वन्नं देयम् ? (उत्तरम्) विदुषां हस्तेषु ॥ तत्र मानवधर्म्मशास्त्रे ॥ न ब्राह्मणं परीक्षेत दैवे कर्म्मणि (२) धर्म्मवित् (३) ॥ पित्र्ये कर्म्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥ अध्या० ३।१४९ ॥ पुनस्तत्रैव ॥ श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ॥ अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥ एकमेव हि विद्वांसं दैवे पित्र्ये च भोजयेत् ॥ पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि ॥ दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ॥ तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥ सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते ॥ एकस्तान् मन्त्रवित्प्रीतः सर्वानर्हति धर्म्मतः ॥ ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च ॥ न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥ यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् ॥ तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययो गुडान् ॥ ज्ञाननिष्ठा द्विजाः केचि-

---

(१) श्रेष्ठमिति—श्रेष्ठम् न्यायेनोपार्जितम् यदन्नं तच्छ्रेष्ठान्नमिति बोद्धव्यम् ॥

(२) दैवकर्म्मणीति—दैवकर्म्मणा बलिवैश्वदेवादिदेवानां यज्ञकर्मेति बोद्धव्यम् ॥

(३) धर्म्मविदिति—धर्म्मविच्छब्देन धर्म्मस्य वेत्तारमिति बोद्धव्यम् ॥ तस्य लक्षणमाह ॥ यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये ॥ निग्रहानुग्रहौ चोभौ स वै धर्म्मविदुच्यते ॥ इति म[illegible]गतशान्तिपर्वणि ॥ अध्या० ३८।१२ ॥

तपो निष्ठास्तथा परे॥ तपःस्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथा परे॥ ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः॥ हव्यानि तु यथान्यायं सर्व्वेष्वेव चतुर्ष्वपि॥ ३।१२८+१३५॥ पुनस्तत्रैव॥ यत्नेन भोजयेच्छ्राद्धे बहृचं वेदपारगम्॥ शाखान्तकमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम॥ एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः॥ पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी॥ ३।१४५+१४६॥ अथ श्राद्धे मूर्खब्राह्मणानामन्नदानस्य निषेधमाह॥ तत्र मानवधर्म्मशास्त्रे॥ ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति॥ तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते॥ आपाङ्क्तदाने यो दातुर्भवत्यूर्द्ध्वम् फलोदयः॥ दैवे हविषि पित्र्ये वा तत्प्रवक्ष्याम्यशेषतः॥ अव्रते(१)र्यद्द्विजैर्भुक्तं परिवेत्तादिभिस्तथा॥ अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते॥ अध्या०३।१६८+१७०॥ अतएव विद्वानेव भोजनीय इति सिद्धम्॥ (यः) यदन्नम् (नः) अस्माकं द्विजातीनाम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्रितौ पितृस्वर्गफलप्राप्तयेऽन्नदानविधिवर्णनं द्वाविंशप्रकरणम्॥ २२॥

—०—

अथ त्रयोविंशार्थमाह॥

पितृदेवादिकार्य्ये ब्रह्मभोजेषु ब्राह्मणैश्चिन्तनीयं गायत्रीमन्त्रार्थमाह॥

**अन्वयः॥ तद्वरेण्यमाम् धीमहि भूर्भुवःस्वर्भर्गो देवस्य सवितुर्यो नो धियः प्रचोदयात्॥ २३॥**

**पदार्थः॥** वयम् ब्राह्मणाः (तद्वरेण्यम्) तच्छ्रेष्ठम्

---

(१) अव्रतैरिति—पूर्वोक्तब्राह्मणव्रतरहितैरित्यर्थः॥

(ओम्) अन्नम् (धीमहि) धारयामः [कस्यान्नम् धीमहि ?] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यानाम् [कथम्भूतमन्नम् ?] (भर्गः) तेजःस्वरूपम् [कस्मै प्रयोजनाय ?] (देवस्य) इन्द्रियादेः (सवितुः) धर्म्ममार्गेषु प्रेरणाय (यः) यदन्नम् (नः) अस्माकं ब्राह्मणानाम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति ॥ २३ ॥

भाष्यम् ॥ वयम् निमन्त्रिता ब्राह्मणाः (तद्वरेण्यम्) तच्छ्रेष्ठम् (ओम्) अन्नम् (धीमहि) धारयामः, भोजयाम इति भावः [कस्यान्नम् धीमहि ?] (भूर्भुवःस्वः) ब्राह्मणक्षत्रियवैश्यानां, नान्येषामिति ॥ अथ ब्राह्मणैर्दैवपितृश्राद्धादिषु द्विजातीनामेवान्नम् भोजनीयमिति स्पष्टीक्रियते ॥ तत्र धर्म्मशास्त्रान्तर्गतयाज्ञवल्क्यसंहितायाम् ॥ ब्राह्मणक्षत्रियविशाम्भैक्ष्यचर्य्या यथाक्रमम् ॥ कृताग्निकार्य्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ॥ अध्या० १।३० ॥ १ ॥ पुनरङ्गिरःसंहितायाम् ॥ ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य च पर्वसु ॥ वैश्यस्यापत्सु भुञ्जीत न शूद्रस्य कदाचन ॥ अध्या० १।५५॥२॥ पुनरापस्तम्बसंहितायाम् ॥ ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य तु पर्वणि ॥ वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन ॥ अध्या० ८।१२॥३॥ (प्रश्नः) कस्माद्ब्राह्मणैः केवलं द्विजातीनामेवान्नं भोजनीयम् ? ॥ (उत्तरम्) अमृतादिरूपत्वात् ॥ तत्र प्रमाणम् ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयस्मृतम् ॥ वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं भवेत् ॥ एतत्सर्वं मयाख्यात श्राद्धकाले समुत्थिते ॥ वैश्वदेवे च होमे च देवताभ्यर्चने जपे ॥ अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम् ॥ व्यवहारानुपूर्वेण धर्मेण क्षत्रिभिर्जितम् ॥ क्षत्रियाणां पयस्तेन विशेऽन्नं पशुपालनात् ॥

इत्यत्रिसंहितायाम् ॥ अध्या० १।३६१ × ३६२॥१॥ पुनरङ्गिरसःसंहितायाम् ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥ वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं ध्रुवम् ॥ अध्या० १।५७॥२॥ पुनरापस्तम्बसंहितायाम् ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ॥ वैश्यस्याप्यन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ॥ वैश्यदेवेन होमेन देवताभ्यर्च्चनैर्जपैः ॥ अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम् ॥ व्यवहारानुरूपेण धर्म्मेण छलवर्जितम् ॥ क्षत्रियस्य पयस्तेन भूतानां यच्च पालनात् ॥ स्वकर्म्मणा च वृषभैरनुसृत्यच शक्तितः ॥ खलु यज्ञातिथित्वेन वैश्यान्नं तेन संस्कृतम् ॥ अज्ञानतिमिरान्धस्य मद्यपानरतस्य च ॥ रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जितम् ॥ अध्या० ८।१३ + १७॥३॥ अतएव ब्राह्मणैः शूद्रान्नम् न भोजनीयमिति सिद्धम् (प्रश्नः) के शूद्राः ?॥ (उत्तरम्) गायत्र्युपासनारहिताः,संस्कारवर्जिता आचारभ्रष्टाश्च ॥ तत्र प्रमाणम् ॥ तत्र पाराशरसंहितायाम् ॥ दुराचारस्य विप्रस्य निषिद्धाचरणस्य च ॥ अन्नं भुक्त्वा द्विजः कुर्य्याद्दिनमेकमभोजनम् ॥ सदाचारस्य विप्रस्य तथा वेदान्तवादिनः ॥ भुक्त्वान्नं मुच्यते पापादहोरात्रन्तु वै नरः ॥ अध्या० १२।५३ + ५४ ॥ १ ॥ पुनर्म्महाभारतान्तर्गतानुशासनपर्वणि ॥ शूद्रकर्म्म तु यः कुर्य्यादपहाय स्वकर्म्म च ॥ स विज्ञेयो यथाशूद्रो न च भोज्यः कथञ्चन ॥ अध्या० १३५।१० ॥ अथ शूद्रान्नभोजनाद्ब्राह्मणस्य का गतिर्भवतीति निर्दिश्यते ॥ तत्र मानवधर्म्मशास्त्रे ॥ राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्च्चसम् ॥ आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः ॥ अध्या० ४।२१८ ॥ १ ॥ पुनरत्रिसंहितायाम् ॥ राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्च्चसम् ॥ अध्या० १।२८७ ॥ २ ॥ पुनरङ्गिरःसंहितायाम् ॥ यो भुंक्ते हि च शूद्रान्नं मासमेकं निरन्तरम् ॥ इह जन्मनि

शूद्रत्वं मृतः श्वा चाभिजायते ॥ शूद्रान्नं शूद्रसम्पर्कः शूद्रेण च सहासनम् ॥ शूद्राज्ज्ञानागमं किञ्चिज्ज्वलन्तमपि पातयेत् ॥ अध्या० १।४८+४९ ॥ पुनस्तत्रैव ॥ शूद्रान्नेन तु भुक्तेन यो द्विजो जनयेत् सुतान् ॥ यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्त्तते ॥ १।५२ ॥ ३ ॥ पुनर्व्याससंहितायाम् ॥ मृतसूतकपुष्टाङ्गो द्विजशूद्रान्नभोजनो ॥ अहमेवं न जानामि कां योनिं स गमिष्यति ॥ शूद्रान्नेनोदरस्थेन यः कश्चित् म्रियते द्विजः ॥ स भवेच्छूकरो नूनं तस्य वा जायते कुलम् ॥ गृध्रो द्वादश जन्मानि सप्त जन्मानि शूकरः ॥ श्वानस्य सप्त जन्मानि इत्येवं मनुरब्रवीत् ॥ अमृतं ब्राह्मणान्नेन दारिद्र्यं क्षत्रियस्य च ॥ वैश्यान्नेन तु शूद्रान्नं शूद्रान्नान्नरकं व्रजेत् ॥ यश्च भुङ्क्तेऽथ शूद्रान्नं मासमेकं निरन्तरम् ॥ इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥ अध्या० ४।६३+६७ ॥ ४ ॥ पुनरापस्तम्बसंहितायाम् ॥ भुञ्जते ये तु शूद्रान्नं मासमेकं निरन्तरम् ॥ इह जन्मनि शूद्रत्वं जायन्ते च मृताः शुनि ॥ शूद्रान्नं शूद्रसम्पर्कं शूद्रेणैव सहासनम् ॥ शूद्राज्ज्ञानागमं किञ्चिज्ज्वलन्तमपि पातयेत् ॥ आहिताग्निस्तु यो विप्रः शूद्रान्नान्न निवर्त्तते ॥ तथा तस्य प्रणश्यन्ति आत्मब्रह्मत्रयोऽग्नयः ॥ शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति ॥ यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रस्य सम्भवः ॥ शूद्रान्नेनोदरस्थेन यः कश्चिन् म्रियते द्विजः ॥ स भवेच्छूकरो ग्राम्यो मृतः श्वा वाथ जायते ॥ अध्या० ८।७+११ ॥ ५ ॥ पुनः पराशरसंहितायाम् ॥ शूद्रान्नं शूद्रसम्पर्कः शूद्रेण तु सहासनम् ॥ शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥ मृतसूतकपुष्टाङ्गो द्विजः शूद्रान्नभोजने ॥ अहं तां न विजानामि कां कां योनिं गमिष्यति ॥ गृध्रो द्वादश जन्मानि दश जन्मानि शूकरः ॥ श्वा योनौ सप्त-

जन्म स्यादित्येवं मनुरब्रवीत् ॥ अध्या० १२।३२+३४ ॥ ६ ॥ पुनः शङ्खसंहितायाम् ॥ शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः ॥ वद्वस्य चैव चौरस्य तथा वार्द्धुषिकस्य च ॥ कदर्य्यस्य नृशंसस्य वेश्यायाः कितवस्य च ॥ गणान्नं भूमिपालान्नमन्नं चैवाश्वजीविनः ॥ सौनकान्नं सूचिकान्नं भुक्त्वा मासं व्रतं चरेत् ॥ १७।३६+३९ ॥७॥ पुनर्वशिष्टसंहितायाम् ॥ किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपो मयम् ॥ पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥ शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः ॥ जुह्वित्वापि यजित्वापि गतिमूर्द्धां न विन्दति ॥ शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः ॥ स भवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले ॥ शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति ॥ यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत् ॥ अ० ६ ॥ ८ ॥ पुनर्म्महाभारतान्तर्गतशान्तिपर्वणि ॥ राजान्नं तेजमादत्ते शूद्रान्नं ब्रह्मवर्चसम् ॥ आयुश्च स्वर्णकारान्नमवीरायाश्च योषितः ॥ अध्या० ३८।२८ ॥ पुनरनुशासनपर्वणि युधिष्ठिरं प्रति भीष्मवाक्यम् ॥ युधिष्ठिर उवाच ॥ के भोज्या ब्राह्मणस्येह के भोज्याः क्षत्रियस्य च ॥ तथा वैश्यस्य के भोज्याः के च शूद्रस्य भारत ॥ भीष्म उवाच ॥ ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव क्षत्रियाः ॥ वैश्याश्चापि तथा भोज्याः शूद्राश्च परिवर्जिताः ॥ ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य ह ॥ वर्जनीयास्तु वै शूद्राः सर्वभक्ष्या विकर्म्मिणः ॥ शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ॥ पृथिवीमलमश्नन्ति ये द्विजाः शूद्रभोजिनाः ॥ अध्या० १३५।१+६ ॥ पुनस्तत्रैव पर्वण्युमां प्रति महेश्वरवाक्यम् ॥ उग्रान्नं गर्हितं देवि गणान्नं श्राद्धसूतकम् ॥ दुष्टान्नं नैव भोक्तव्यं शूद्रान्नं नैव कर्हिचित् ॥ शूद्रान्नं गर्हितं देवि सदा देवैर्महात्मभिः ॥ पितामह

मुखोत्सृष्टं प्रमाणमिति मे मतिः ॥ शूद्रान्नेनावशेषेण जठरे यो म्रियेद्द्विजः ॥ अहिताग्निस्तथा यज्वा स शूद्रगतिभाग्भवेत् ॥ तेन शूद्रान्नशेषेण ब्रह्मस्थानादपाकृतः ॥ ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा ॥ यस्यान्नेनावशेषेण जठरे म्रियते द्विजः ॥ तां तां योनिं व्रजेद्विप्रो यस्यान्नमुपजीवति ॥ ब्राह्मणत्वं शुभं प्राप्य दुर्लभं योऽवमन्यते ॥ अभोज्यान्नानि चाश्नाति स द्विजत्वात् पतेत वै ॥ अध्या० १४३।१७+२२ ॥ [कथम्भूतमन्नम् ?] (भर्गः) तेजः स्वरूपम्, वीर्य्यस्वरूपम् वा [कस्मै प्रयोजनाय ?] (देवस्य) इन्द्रियादेः (सवितुः) व्यत्ययेन सवित्रे धर्म्ममार्गेषु प्रेरणाय (यः) यदन्नम् (नः) अस्माकं ब्राह्मणानाम् (धियः) बुद्धीः (प्रचोदयात्) धर्म्ममार्गेषु प्रेरयति ॥

इत्यार्य्यसम्प्रदायप्रदर्शकगायत्रीभाष्ये गायत्र्यां ब्राह्मणभक्ष्यान्नवर्णकं त्रयोविंशप्रकरणम् ॥ १८ ॥

—०—

अथ चतुर्विंशार्थमाह ॥

अन्वयः ॥ देवस्य तद्वरेण्यम् भर्गो ओम् धीमहि भूर्भुवःस्वः सवितुर्यो नो धियः प्रचोदयात् ॥ २४ ॥

पदार्थः ॥ वयम् ब्राह्मणाः सन्यासिनो वा (देवस्य) इन्द्रियादेः (तद्वरेण्यम्) तच्छ्रेष्ठम् (भर्गः) वीर्य्यम् (ओम्) अन्नम् (धीमहि) धारयामः [कस्मै प्रयोजनाय ?] (भूर्भुवःस्व) प्राणापानव्यानादीनाम् (सवितुः)

यस्मै (यः) यदन्नम् (नः) अस्माकम् ( धियः बुद्धीः (प्रचोदयात्) धर्ममार्गेषु प्रेरयति ॥

भाष्यम् ॥ वयम् ब्राह्मणाः सन्यासिनो वा (देवस्य) इन्द्रियादेः (तद्वरेण्यम्) तच्छ्रेष्ठम् (भर्गः) वीर्य्यम् ( ओम् ) अन्नम् ( धीमहि ) स्वोदरे धारयामः [कस्मै प्रयोजनाय ?] (भूर्भुवःस्वः) प्राणापानव्यानादीनाम् (सवितुः) "व्यत्ययेन चतुर्थी" यज्ञाय प्राणाग्निहोत्रायेति भावः ॥ अथ प्राणाग्निहोत्रायान्नं भोजनीयमिति स्पष्टीक्रियते ॥ तत्र छान्दोग्योपनिषदि ॥ अथ खल्वेतयर्चापच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठᳪं सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति ॥ ५।२।७ ॥ १ ॥ पुनर्बृहदारण्योपनिषदि ॥ अथैनमाचामति तत्सवितुर्वरेण्यं मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधी भूः स्वाहा, भर्गो देवस्य धीमहि मधुनक्तमुतोषसो मधुमत्पार्थिवᳪंरजः मधुद्यौरस्तु नः पिता भुवः स्वाहा धियो यो नः प्रचोदयान्मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वाश्च सावित्री मन्वाह सर्वाश्च मधुमतीरहमेवेदᳪं सर्वं भूयासं भूर्भुवःस्वः स्वाहेति ॥ ८।३।६ ॥ २ ॥ पुनः प्राणाग्निहोत्रोपनिषदि ॥ अस्मिन्नेव पुरुषशरीरे विनाप्यग्निहोत्रेण विनापि साङ्ख्ययोगेन संसारविमुक्तिर्भवतीति स्वेन विधिनान्नं भूमौ निक्षिप्य या ओषधयः सोमराज्ञीरिति तिसृभिरन्नं पवत इति द्वाभ्यामनुमन्त्रयते ॥ १।२ ॥ पुनस्तत्रैव ॥ आपोऽमृतमस्य मृतोपस्तरणमस्य मृतञ्च प्राणे जुहोमि अमाशिष्यान्तोऽसि प्राणाय प्रधानाय स्वाहा अपानाय

स्वाहा, व्यानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा, इति कनिष्ठयाङ्गुल्या अङ्गुष्ठेन च प्राणे जुहोमि, अनामिकया अपाने मध्यमया व्याने प्रदेशिन्या समाने सर्वाभिरुदाने तूष्णीमेकामेक ऋषौ जुहोति ॥१।११॥३ ॥ अतएव प्राणाग्निहोत्रायान्नं भोजनीयमिति सिद्धम् ॥ (यः) यदन्नम् (नः) अस्माकम् (धियः) बुद्धीः (प्रचोदयात्) प्रेरयति ॥ २४ ॥

इति श्रीमन्महर्षिकात्यायनवंशोद्भव श्री१०८ युतमिश्र-
मन्नालालात्मजश्रीमिश्रजगन्नाथ विरचिते सर्वतन्त्र-
रहस्ये आर्य्यसम्प्रदायप्रदर्शकभाष्ये गायत्री-
भाष्ये गायत्रीतोऽन्नभोजनविधिवर्ण-
नम् नाम चतुर्विंशप्रकरणम् ॥

—०—

द्विपञ्चनवचन्द्राब्दवत्सरे रविवासरे ॥ नवम्यां पूर्त्तिमगमत् चैत्रे पक्षे सितेतरे ॥ १ ॥ कात्यायनकुले जातः कान्यकुब्जमहीसुरः ॥ मिश्रोपाधिः शूरिवरः काली [गयत्री] पूजनतत्परः ॥२॥ मन्नालालस्य तनयो जगन्नाथो महामतिः ॥ गायत्र्याः सुगमं भाष्यम् कृतवान् विदुषां मुदे ॥ ३ ॥ कानपूरजिलामध्यगतापाण्डोनदी तटे ॥ पाल्हेपुरो वरीवर्त्ति, जन्मभूमिः कवेः स्मृतः ॥ ४ ॥ समया भावतश्चाशु तयेदं परिशोधितम् ॥ यत्र कुत्राप्यशुद्धञ्चेत्तत् शोध्यं समदर्शिभिः ॥ १ ॥ व्याकरणप्रतिकूलं यत् तत्रापि यदसङ्गतम् ॥ साहित्यादीन् परित्यज्य केवलं तद्विशोधितम् ॥ २ ॥ ग्रन्थकर्त्तुरनुज्ञैव तद्वत् शोधनमूलिका ॥ अतः पश्यन्तु मां सन्तः सद्दृष्ट्या दोषहीनया ॥ ३ ॥ सूरिभिः सर्वदा श्लाघ्यो ग्रन्थकर्त्तुः परिश्रमः ॥ यश्चेदं सुमहद्ग्रन्थं निर्ममे सर्वसुन्दरम् ॥ ४ ॥ तद्दृष्ट्वा

सुमहद्भाष्यं जगन्नाथविनिर्मितम्॥ योजयामि तमाशीर्भिः सप्तभिः परितुष्टितः॥ ५॥ ब्रह्मादिदेवनतमौलिकिरीटरत्नप्रेङ्ख-न्मयूखवलितक्रमपङ्कजश्रीः॥ भक्तिप्रनम्रजनदोहदकल्पवल्ली सा नन्दिनी दिशतु मङ्गलमिन्दुमौलेः॥६॥ चञ्चत्करालकरवालतडित्-कराग्रा प्रोत्क्रान्तघोरतरशोणितशोणदृष्टिः॥ चण्डासुरक्षतजपान-विलोलजिह्वा कल्लोलयत्वविरतं कुशलानि काली॥ ७॥ गायत्री मन्त्रभाष्यं तिरयतु सततं दुष्कृतं पाठकानां, भूयात् श्रोति-प्रकाण्डश्रवणपुटचमत्कारि जीयात् सुकीर्त्तिः॥ ज्योत्स्ना पूरप्र-पाण्डुर्दिशि विदिशि समुच्चार्य्यमाणा कवीन्द्रैरस्तु व्यामोहशान्ति-र्हृदि सृजतु मुदं निश्चलं चन्द्रमौलिः॥ ८॥

श्रीचन्द्रमौलिसुकुलः।

—०—